॥श्रीः॥

विद्याभवन प्राच्यविद्या ग्रन्थमाला

९७

# वेदशाखापर्यालोचनम्

कत्यायनकृतसंस्कृतव्याख्यया समलङ्कृतः

## चरणव्यूहः

लेखकः

**डॉ० श्रीकिशोरमिश्रः**

प्राध्यापकः

संस्कृतविभागः काशीहिन्दूविश्वविद्यालयः, वाराणसी



**चौखम्भा विद्याभवन**

वाराणसी

॥ श्रीः ॥

विद्याभवन प्राच्यविद्या ग्रन्थमाला
९७

# वेदशाखापर्यालोचनम्

कात्यायनकृतश्च संस्कृतव्याख्यया समलङ्कृतः

## चरणव्यूहः

लेखकः
डॉ० श्रीकिशोरमिश्रः
प्राध्यापकः
संस्कृतविभागः
काशीहिन्दूविश्वविद्यालयः
वाराणसी



चौखम्बा विद्याभवन
वाराणसी

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४



संस्करण २००१ ई०

मूल्य ४०-००

अन्य प्राप्तिस्थान

**चौखम्बा सुरभारती प्रकाशन**

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : { ३३३४३१
३३५२६३ }

*

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१

मुद्रक

फूल प्रिण्टर्स

वाराणसी

# विदुषां शुभाशंसनानि

श्रीश्रीकिशोरमिश्रेण लिखितं सव्याख्य चरणव्यूहयुतं वेदशाखापर्यालोचनं मयाऽवहितमनसाधीतम्। ग्रन्थोऽसौ यद्यपि लघुकलेवरस्तथापि पर्यालोचित-विषयविवेचनविचारेण नाल्पमहत्त्ववान्। इह शाखाःलोचनातिरिक्तानां चापि वेदविषयकजिज्ञासानां यथाविवेकं समाधानं विहितम्, यथा—

(क) पुरातनतमे मन्त्रदर्शकर्षिवैदिकवाङ्मयसाक्षात्कारकाले वैदिक-संहितामन्त्राणां तासु तासु विभिन्नाख्यावतीसु ऋग्यजुःसामाथर्वाख्यसंहितासु सङ्ग्रहोऽभवदथवा परवर्त्तिकाले ?

(ख) परवर्त्तिकाले यदि विभिन्नासु चतसृषु संहितासु मन्त्राणां विभाजनं जातं तदा कानि तानि कारणानि गुणधर्मभूतानि यान्याधृत्य विभाजनं विहितम् ?

(ग) शाखाशब्दस्य कोऽर्थः ? केन धातुना मूलशब्देन वा 'शाखा'-शब्दस्य यास्कादिभिर्निरुक्तिः प्रदर्शिता ?

(घ) केन वेदेन काः काः शाखाः कस्माद्धेतोः सम्बद्धाः ?

(ङ) एकस्य वेदस्य विभिन्नासु शाखासु किमन्तरम् ?—इत्यादीनां सविवेचनं समाधानमप्यस्ति। कुत्र के के विकृतिपाठाः क्रियन्ते - इत्यपि अवश्यमेवागन्तव्यमितिकृत्वा तदत्र निर्दिष्टम्। चरणव्यूहाख्याल्पतरग्रन्थस्य तु वैदिकसंहितापाठप्रणालीज्ञानसमुत्सुकानां कृतेऽतीव महत्त्वं विद्यते।

एतत्सर्वमत्र विवेच्य, व्याख्याय, सुनिर्दिश्य च श्रीश्रीकिशोरमिश्रेण वैदिकवाङ्मयसम्पृक्त-सूचकबोधोपस्थापकेन यो यत्नो विहितः, स अवश्यमेव साधुवादार्हः। कामयेऽस्य ग्रन्थस्याधिकाधिकप्रचारम्। अथ च श्रीमिश्रेण भविष्यति काले एतादृशानां महत्त्वपूर्णानां महतां च ग्रन्थानां रचना भवेदिति मदीयं शुभाशंसनमित्यभिनन्दयति ग्रन्थमेनम्—

**करुणापतित्रिपाठी**
अध्यक्षः
उत्तरप्रदेश-संस्कृत-अकादमी
लक्ष्मणपुरम्

मार्गशीर्षशुक्लैकादश्यां
गीताजयन्तीत्वेन मन्यमानायाम्
तत्र २०४२ वैक्रमाब्दे

ॐ

अस्मच्छिष्येण डाक्टरश्रीकिशोरमिश्रेण विरचितं सव्याख्यचरणव्यूहयुतं वेदशाखापर्यालोचनं नाम ग्रन्थं सिंहावलोकनन्यायेन विचारितवतां नितरां प्रसीदति नोऽन्तःकरणम् । वेदविद्यायां विहितसफलश्रमेण श्रीकिशोरेण सुप्रसिद्धं चरणव्यूहग्रन्थमाश्रित्य नूत्नं यद्व्याख्यानं वेदशाखानां पर्यालोचनपुरःसरं प्रस्तुत तत्र सर्वत्रैतस्य ज्ञानगाम्भीर्यं, समीक्षणनैपुण्यं, सूक्ष्मेक्षिका च स्फुट दरीदृश्यन्ते । वैदिकवाङ्मयस्य स्वरूपं, व्यापकत्वं, शाखाभेदं च बोद्धुकामानां नितरां सहायकोऽयं ग्रन्थ इति निश्चयेन विश्वसिमः ।

स्नेहभाजनं श्रीकिशोरमाशीर्भिर्योजयन्तो वयमेतस्य ग्रन्थरत्नस्य विद्वत्समाजे व्यापकं समादरं कामयामहे । वेदविद्याजननी सारस्वतेन श्रमेण समुज्ज्वलरूपा तदुपासकानां ज्ञानदार्ढ्यं दिश्यादिति सश्रद्धं प्रार्थयते,

**विश्वनाथभट्टाचार्यः**

आचार्योऽध्यक्षश्च

संस्कृतविभागस्य

काशीहिन्दूविश्वविद्यालयः

एतमर्थमभिव्यञ्जयतो मम हृष्यति चेतो यत् डा० श्रीकिशोरमिश्रेण एम० ए० आचार्योपाध्यलङ्कृतेन संस्कृतविभागीयप्राध्यापकेन वेदशाखापर्यालोचनाख्यं पुस्तकं, कात्यायनीयचरणव्यूहस्य व्याख्यानं चारचितम् । एतत् सव्याख्यचरणव्यूहयुतं वेदशाखापर्यालोचनं कर्त्तुर्वैचक्षणीमाचक्षाणमखिलशास्त्रज्ञचेतःकौतूहलावहं विशेषतो वैदिकवाङ्मयं प्रविविक्षूणामन्तेवासिनां सर्वपथीनोपकारमावहदस्तीति सकर्तृकमेतदभिनन्दयति—

**वीरेन्द्रकुमारवर्मा**

आचार्यः

संस्कृतविभागे

काशीहिन्दूविश्वविद्यालयः

डॉ० श्रीश्रीकिशोरमिश्रसंग्रथितं सव्याख्यचरणव्यूहयुतं वेदशाखापर्यालोचनभिधं प्रकरणमवलोक्य नितरां प्रसीदति चेतः। सर्वज्ञकल्पोऽयं महान् वेदः कालक्रमेण विद्याह्रासादग्राह्यतां गत इवेतिहेतोः परमकारुणिकेन भगवता कृष्णद्वैपायनेन ऋग्यजुःसामाथर्वनामभिश्चतुर्द्धा विभज्य यथाक्रमं स्वशिष्यान् पैल-वैशम्पायन-जैमिनि-सुमन्तून् सम्यगध्यापितोऽपि स्वल्पमतीनां मानवानां यथापूर्वमग्राह्य एवेत्यतः परस्ताच्छिष्यपरम्परया शाखाभेदमाप्तवानिति नाविदितं विपश्चिताम्। तमेव शाखाभेदं प्रकृत्य महर्षिणा वेदतत्त्वार्थदर्शिना कात्यायनेन प्रकल्पितोऽयं चरणव्यूहाऽभिधो ग्रन्थः। आर्षवचनेषु प्रामाण्यसंशयाऽभावात्तादृशेषु ग्रन्थेषु यत्किमप्युच्यते तत्र प्रायेण प्रमाणादिप्रदर्शनं न क्रियते। अतः शाखाभेदादिविषये प्रेक्षावतां प्रमाणादिजिज्ञासा नैसर्गिकीति कृत्वा तस्याः प्रशमनाय कश्चन प्रमाणादिप्रदर्शनपरः प्रबन्धोऽपेक्ष्यत एव। सेयमपेक्षा श्रीमिश्रमहोदयसन्दृब्धेन निरुक्तपुराणेतिहासादिवचनोपबृंहितेन शोधपूर्णेनानेन वेदशाखापर्यालोचनाख्यप्रकरणेन सुतरां पूरयिष्यत इत्यस्माकं विश्वासः। वयसा नाऽतिप्रौढोऽपि मिश्रमहोदयो विचारचातुरीसम्वलित इति विदुषां साधुवादमर्हति।

अन्ते चेयमेव कामना यद् भवानीभवयोरनुग्रहेण श्रीमिश्रस्येयं सारस्वती सपर्या भविष्यत्यपि काले निष्प्रत्यूहमनुवर्त्ततां, येन जिज्ञासूनां, विशेषेण वैदिकानाम् महानुपकारः स्यादिति निवेदयति—

विद्वदनुविधेयः—

**श्रीनारायणमिश्रः**

उपाचार्यः
संस्कृतविभागे
काशीहिन्दूविश्वविद्यालयः

आश्विनपूर्णिमा
२०४२ वि० सं०

महत्पयोधिभूतस्य वैदिकसाहित्यस्य पीयूषकणिकाश्चिरन्तनकालाद् विज्ञानालोकान्वेषकान् समेधयन्त्यः सञ्जीविन्य इव भुवि शोभायन्ते। अतएव निखिलधर्माचाराचरणविभासितेऽस्मिन् विश्वस्मिन् नैकैः प्राच्यपाश्चात्त्यविद्वद्वरेण्यैः लोकोपकृतये ऋतप्राप्तये च लघवो महान्तश्च विचारसन्दब्धाः ग्रन्थाः वेदविद्यामधिकृत्य सादरं प्रणीताः। तेषु कात्यायनप्रणीतस्य चरणव्यूहाभिधेयस्य ग्रन्थस्य इदम्प्रथमतया ऐतिह्यसरणिप्रवर्त्तनात् कुम्भपयोधिन्यायेन वेदविद्याया अवितथस्वरूपप्रतिपादनाच्च वरीवर्त्ति महत्वपूर्णं स्थानम्। तमिमं स्वव्याख्यया स्फुटीकुर्वन्, वेदशाखापर्यालोचनात्मकेन प्रबन्धभागेन चालङ्कुर्वँल्लेखकः डॉ०श्रीकिशोरमिश्रः नूनं साधुवादार्हः। विदुषा लेखकेन तार्किकदृशा विचारसन्दब्धं यन्नूत्नं समालोचितं, तस्मिन्—आरण्यकशब्दप्रवृत्तिनिमित्तम्, पौराणिकदृशा वेदशाखाविस्तारः, चरणशाखापदयोर्विचारः, वैदिकानां पारम्परिकोच्चारणवैशिष्टयम्, काण्वसंहितायाः देशविशेषासम्बद्धत्वप्रसाधनम्, यजुषां कृष्णत्वे हेतूपन्यासः, तैत्तिरीयसंज्ञायाः अनादित्वम्, सामसंहितागानयोः स्वरूपविमर्शः, अथर्वशब्दार्थश्चेत्येते विषयाः सुधीजनानां वेदविद्यावदातानां मानसं भृशं प्रमोदयन्ति।

ग्रन्थोऽयं वेदपरम्परारहस्यजिगमिषूनामध्येतॄणामध्यापयितॄणाञ्च प्रीतिकरः स्यादित्यनुभावयन् वैदिकवाङ्मयश्रियोऽभिवृद्धये लेखकं शुभाशीर्भिरभिनन्दयति—

युगलकिशोरमिश्रः
आचार्योऽध्यक्षश्च
वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

दीपावलिः
२०४२

# भूमिका

वेदः साङ्गो ह्यस्माकं भारतीयानां प्रतिष्ठाधायको भवति विश्वस्मिन्। वेदमधिकृत्यपूर्वाचार्यैर्भूयांसो ग्रन्था विरचिताः। तत्परम्परयैवाधुनिकैरपि मनीषिभिरनेकभाषासु वैदिकज्ञानराशिर्व्याख्यातः। तत्रैवास्माकमयमुद्यमः। वैदिकैतिह्यविषयोऽपि विद्वद्भिरालोडितचरो वर्तते। अतश्चालोचनदृष्ट्यैवात्र प्रायशो विषयसन्निवेशः, न तु समस्तवैदिकेतिहासपरिचायनधिया। वेदानामितिहासलेखनं नाधुनिकैरिदम्प्रथमतया विहितम्। शौनककात्यायनादिमहर्षिभिरेवेयमितिहासोपदेशपद्धतिः स्वीकृता चरणव्यूहादिग्रन्थेषु। वैदिकेतिहासग्रन्थश्चरणव्यूहाख्यः प्राचीनतम इत्यस्यास्माकीनस्य ऐतिह्यालोचनपुस्तकस्य परिशिष्टभागे स निबद्धः, परम्परानुगमकामिभिर्ग्रन्थगौरवलोलुपैश्चास्माभिः। चरणव्यूहेषु शौनक-कात्यायन-व्यासादिविरचितेषु नैकविधेषु कात्यायनोक्तमेवाष्टादशयजुःपरिशिष्टान्यतममत्र चरणव्यूहपरिशिष्टं परिगृहीतं, वारेशास्त्रिप्रकाशितपाठस्य शुद्धत्वप्रामाणिकत्वोपगमादन्यचरणव्यूहपाठानां बहुशो भ्रष्टत्वाच्च। अयमपि पाठः सर्वमान्य एवेति न विनिश्चयः, देवरातविदुषा अत्रत्यमूलोक्तपाठस्य चरणव्यूहपरिभाषासूत्रभाष्यत्वेनोल्लेखात्। अथाप्यापेक्षिकप्राशस्त्यमस्यास्त्येव।

यद्यपि न वैदिकैतिह्यस्योपकल्पनं समुचितम्, वेदानां नित्यत्वादपौरुषेयत्वाच्च। उत्पादे कारणानपेक्षत्वात् कारणापेक्षणस्यासम्भवाच्च वेदा नित्याः। शब्दात्मकानामेषां कारणापेक्षणे पुरुष एव कारणं सम्भवेत्। तस्य कारणत्वं, १–वर्णोत्पादात्, २–पदोत्पादात्, ३–अर्थसम्बन्धाद्, ४–वाक्यविरचनात्, ५–स्वातन्त्र्येण वा कर्तृत्वेन प्रसिद्धेरिति।

तत्र वर्णानां नित्यत्वेन तदुत्पादने पुरुषस्यानपेक्षा। न च वर्णानामुत्पाद्यत्वमुत्पन्नो गकारो विनष्टो गकार इति प्रतीत्या तस्योत्पत्तिविनाशवत्त्वस्यानुभविकत्वादिति वाच्यम्। गकार उत्पन्न इत्यनुभवे ध्वनिर्वर्णश्चेति द्वयं प्रतीयते। उत्पत्तिश्चैको धर्मः, स चैकेन धर्मिणा सम्बध्येत, सकृदनुभूयमानायास्तस्या उभयसम्बन्धाभावात्। स चोत्पत्तिरूपो धर्म एकोऽवभासमानः, कारणव्यापारविषयत्वेनानुभूयमाने सम्प्रतिपन्ने ध्वनावुपक्षीण इति वर्णेन साकं तदुत्पत्तिरूपधर्मसम्बन्धे प्रमाणाभाव इति वर्णोऽनुत्पन्न एवावशिष्यत इति

न तत्र तदुत्पत्तिद्वारा पुरुषापेक्षा। न च ध्वनिवर्णयोर्भेदाभाव इति वाच्यम्, ध्वन्यवभास्यत्वेन वर्णस्य भेदात्। न ह्यवभास्यावभासकयोरैक्यं सम्भवति, स्वयम्प्रकाशपदार्थं वर्जयित्वा। वर्णश्च न स्वयम्प्रकाश इति न तस्य ध्वनिना साकमभेदः। प्रसिद्धश्च ध्वनेरभिघातेन साकं कार्यकारणभावः। दण्डाद्यभिघातस्थले तस्य कार्यकारणभावग्रहात्, वर्णस्य च तत्राभावात्। ध्वनिर्द्विविधः, सवर्णोऽवर्णश्च। तत्रावर्णध्वनेर्वर्णभेदेऽपि सवर्णध्वनिर्वर्णाभिन्न इति न वाच्यम्। ध्वनिसामान्ये क्लृप्तेनावघातस्य कारणत्वेनोपपत्तौ विशेषकार्यकारणभावकल्पने गौरवात्। न च विशिष्यैव कार्यकारणभावो नास्ति सामान्येन कार्यकारणभाव इति वाच्यम्। ध्वनिसामान्याभावस्यैकेनैवाभिघाताभावेनोपपत्तौ यावद्विशेषाभावसाधनार्थं यावद्विशेषकारणाभावकल्पने गौरवात्। कूटादिकल्पना त्वतिगौरवग्रस्ता।

एतावता ध्वनिसामान्यं प्रति क्लृप्तस्यावघातस्य कारणस्य ध्वनिरूपकार्यविषयत्वेन ज्ञायमानाया उत्पत्तेस्तत्सम्बन्धित्वेन तस्योत्पन्नत्वविज्ञानेऽपि वर्णस्योत्पन्नत्वाभावेन तद्द्वारा पुरुषस्यानपेक्षणात्। एवञ्च उत्पन्नो गकारो विनष्टो गकार इति प्रतीतिर्ध्वन्यभिप्राया, न तु वर्णाभिप्रायेति वर्णस्य नित्यत्वमव्याहतम्। अतएव स एवायं गकार इति प्रत्यभिज्ञाप्युपपद्यते। एवञ्च वर्णानामुत्पत्त्यभिप्रायेण तद्द्वारेण पुरुषानपेक्षणम्।

एवमेव पदोत्पादादर्थसम्बन्धाद् वाक्यविरचनद्वारापि च पुरुषानपेक्षणं क्रमशो मीमांसकाचार्यैः संसाधितम्। नापि स्वातन्त्र्येण कर्तृतया वैयासिकं भारतमित्यादिवत् पुरुषापेक्षा वेदे कर्तुरनुपस्थितत्वात्। न च कर्तुरनुपस्थितिर्नाभावात् कर्तुः, किन्तु कालविप्रकर्षेण उत्सन्नदेशस्थितकूपारामादिवत्सम्प्रदायविच्छेदादिति वाच्यम्। वैदिकसम्प्रदायाविच्छेदादेव वेदे कर्तृस्मरणस्यावश्यापेक्षणे तदभावेन कर्तुरभावानुमानम्। काठक-कौथुम-तैत्तिरीयादयः शब्दा न कर्त्रर्थतद्धितान्ताः, किन्तु प्रोक्तार्थप्रत्ययान्ताः।

एवं हि पञ्चभिः प्रकारैर्वेदे पुरुषसम्बन्धस्य वक्तुमशक्यत्वेन प्रकारान्तरस्य चासत्त्वेन वेदापौरुषेयत्वम्।

अपरे ब्रुवते-ध्वन्यभिन्ना एव वर्णास्तत्र ध्वनीनामुत्पादविनाशावेव वर्णात्मकशब्दस्योत्पत्तिविनाशाविति न वेदानां नित्यत्वम्। अनित्यत्वेन कारणापेक्षणे पुरुषातिरिक्तस्य तत्र कारणाभावात् पुरुष एव तत्र कारणं भवति। तावतापि न तत्राप्रामाण्यम्। अस्मदादीनां वेदकर्तृकत्वस्यासम्भवेन सर्गादावीश्वरेणैव तत्तदृष्यादिरूपधारणेन तदुत्पादनात्। न च लौकिकशब्दवत्

पुरुषगतभ्रमप्रमादादिदोषसङ्क्रान्तिस्तत्र। ईश्वरस्य नित्यनिर्दोषत्वेन पुरुषदोषसङ्क्रान्तेस्तत्राभावेनेश्वरप्रामाण्याद् वेदानां प्रामाण्यम्।

अन्यैरुच्यते—यस्य निःश्वसितं वेदा इत्यादिवचनेन वेदविरचने विशेषप्रयत्नाभावादीश्वरस्यापि वेदविषये न स्वातन्त्र्यम्। सुप्तप्रतिबुद्धन्यायेनेश्वरेण गतकल्पीयस्यैव वेदस्यास्मिन् कल्पे उपदेश इत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य कर्तृत्वस्यात्रासम्भवेन नित्यत्वं वेदानाम्। धाता यथापूर्वमकल्पयदित्यनेनेश्वरेण गतकल्पीयस्यैवाविकृतस्योपदेशनमिति न तस्य तत्र स्वातन्त्र्यम्। शब्दविषये प्रयोगमात्रेण न कर्तृत्वप्रयोक्तृत्वयोर्विज्ञानसम्भवः। यतः समानयैव रीत्या कर्तापि प्रयोक्तापि च प्रयुङ्क्ते शब्दान्। तस्मात् प्रमाणान्तरेणार्थविज्ञानपूर्वकशब्दप्रयोक्ता तत्र कर्तृत्वेनाध्यवसीयते। यस्तु शब्दविज्ञानपूर्वकमेव शब्दप्रयोक्ता स प्रयोक्तैव शब्दानां न कर्तेति। कालिदासादिग्रन्थस्य अस्माभिः प्रयोगेऽपि नास्माकं तदीयग्रन्थे कर्तृत्वम्। यतोऽस्माकं तदीयशब्दविज्ञानपूर्वकमेव तदीयशब्दप्रयोगकरणमिति शब्दपूर्वकत्वेनास्माकं तत्र न पदानां निस्सारणे योजने वा स्वातन्त्र्यमिति न वयं कर्त्तारस्तत्र। कालिदासस्त्वर्थं विज्ञाय तदनुकूलशब्दप्रयोगं कुरुत इति तस्य कर्तृत्वमिति स स्वेच्छया तत्र शब्दं निस्सारयेद् योजयेद् वा। एवमीश्वरेणापि गतकल्पीयस्यैव वेदस्योपदेशनेम न तस्य तत्र स्वातन्त्र्यं कर्तृत्वञ्चेति वेदा अपौरुषेयाः। अपरेषु अस्मदीयग्रन्थेषु धर्मान्तरीयेषु च कर्तृविस्मरणाभावेन पौरुषेयत्वम्।

स चायमपौरुषेयो गद्यपद्यात्मा सम्प्रति ऋगादिशब्दैर्व्यवह्रियमाणो वेदः पूर्वमविभक्तावस्थो व्यसनेन त्रिविधत्वं चतूरूपत्वञ्च प्राप्तः। स च त्रयीशब्देन व्यवह्रियते, चत्वारो वेदा इति च। यज्ञार्था एव वेदानां प्रवृत्तिः। होत्रादीनां चतुर्णामृत्विजां क्रियमाणकर्मप्रतिपादकत्वाद् वेदचतुष्टयोपयोगः। ऐतरेये उच्यते—"ऋचैव हौत्रं क्रियत यजुषाध्वर्यवं साम्नोद्गीथं, व्यारब्धा त्रयी विद्या भवति" इति। अथ केन ब्रह्मत्वं क्रियत इत्युत्तरमुच्यते—"त्रय्या विद्ययेति ब्रूयात्"—इति। नात्र त्रयी विद्या पूर्ववेदत्रयमेव।

तस्यायं भावः—यज्ञे ब्रह्मणः कार्यं सर्वेषामृत्विजां तदीयकार्येषु न्यूनातिरिक्तत्वादिदर्शनं, तन्निबन्धनकर्मवैकल्यपरिहारश्च। तच्चोक्तानामृत्विजां साकल्येव कार्यविज्ञानं विना दुष्करम्। तदर्थं वेदत्रयविज्ञानापेक्षा ब्रह्मणः। एवं स तत्कार्यं विज्ञाय, तत्र वैकल्यं विज्ञाय, तत्परिहारञ्च प्रायश्चित्तादिना कुर्यादिति पूर्वोक्तवेदत्रयकर्मकलापसङ्ग्राहकत्वादथर्ववेद एव

त्रयीविद्या। अतएव ब्राह्मणे न केवलं त्रय्येति प्रतिपादितमपितु विद्ययेति विद्या-पदसाहित्येन वचनम् । न च प्रत्येकं वेदस्य, वेदपदसमानार्थत्वेन विद्यापदेन ग्रहणमिति त्रयीविद्याशब्देनोक्तवेदत्रयस्यैव तत्र ग्रहणमिति वाच्यम् । सत्यपि प्रतिवेदं विद्याशब्दबोध्यत्वे अत्र त्रयीविद्याशब्दो न यौगिकार्थः, किन्तु संज्ञाप्रतिपादको रूढार्थः। संज्ञाया अपि प्रतिपादनं वाक्येन समानार्थेन क्रियत इति निरुक्ते प्रोच्यते। तदनुसारेणैवात्र ब्राह्मणे शङ्कायां, व्यारब्धा त्रयी विद्येति वचनेन रूढार्थस्यैव द्योतनम् । अतश्चात्र 'वि' पदप्रयोगः, न तु आरब्धा इति। विपदप्रयोगेण स्वयमर्थो बोध्यते यत्—त्रयी विद्या आथर्वणो वेदो, व्यारब्धा विशेषेण भिन्नत्वेन आरब्धा सम्पन्ना वर्तते, इति। अन्यथा होत्रादिकर्मत्रये उपयोगाभिप्रायेणोपयुक्ता विद्येति ब्रूयात् । तत्रर्गादिवेदत्रय-ग्रहणाभिप्राये आङ्पूर्वस्य रभ्धातोरुपयोगार्थे लक्षणा वक्तव्या स्याद् गौरव-ग्रस्ता। धातूनामनेकार्थत्वाश्रयणेऽपि सैव गतिः स्यात्। तस्माद् व्यारब्धा त्रयी विद्येति ब्राह्मणोक्तं रूढाभिप्रायम् । एवञ्चोत्तरेऽपि त्रयी विद्येति रूढाभि-प्रायमेवेत्यथर्ववेदस्यैव तेन ग्रहणम्। तेनैव ब्रह्मत्वकरणमिति तदर्थः। न च त्रयी विद्येति प्रसिद्धिस्तर्हि अथर्वसंज्ञाया वैयर्थ्यायुक्तत्वापत्ती इति वाच्यम्। त्रयी विद्येति प्रसिद्धिः केवलयज्ञोपयोगाभिप्रायेण। आथर्वणे तु यज्ञोपयोगाति-रिक्तानामपि पुष्ट्यादिकर्मणां प्रतिपादकत्वसङ्ग्रहः।

चतुर्धा विभक्तस्य वेदस्याशक्तिवशतः सर्वग्रहणासम्भवे नित्योपयोगं कादाचित्कोपयोगं च निमित्तीकृत्य शाखासु विभजनम् । तत्र नित्योपयोगभागः साधारणः सर्वत्र, असाधारणस्तु कादाचित्कोपयोगभागः। अतएव शाखाभेदेऽपि बहुलांशसाम्य-बहुलांशवैषम्ययोश्चोपपत्तिः।

सोऽयमिष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायबोधकोऽपौरुषेयवाक्य-स्वरूपः ऋषिभिर्दृष्टः पाठादपि पुण्यजनकः सम्प्रदायावाप्तो वेदः ग्रन्थविधया द्विधा, मन्त्रब्राह्मणभेदात्। उभयोरपि वेदभागयोः वर्त्तमानः सम्प्रदायसिद्धः, अरणमशान्तिं संशयं वा यो वेदांशो विशेषतो यापयति स आरण्यकाख्यः। एवमुभयोरपि वेदभागयोः कर्मशेषविरहितो गुरुसमीपमुपगम्य श्रवणमनननिदि-ध्यासनविधयानुशीलितो निश्चयेन सादयति विशीर्यत्यज्ञानं स वेदांश उपनिषद्रूपः।

मन्त्रो नाम भृशमभ्यासात्मकेन मननेन, विहितक्रियाविनियोगावबोधनेन वा कामनापूरकत्वादात्मत्राणपरो वेदभागः। अतएव कर्माङ्गभूतद्रव्यदेव-तास्मारको फले दृष्टेऽपि नियमादृष्टकरो मन्त्र इति याज्ञिका अभिप्रयन्ति। स च कर्माङ्गभूतश्चतुर्धा—करण - क्रियमाणानुवाद्य - नुमन्त्रण - जपभेदात्।

यस्योच्चारणसमनन्तरं कर्म क्रियते स करणमन्त्रः। यथा—याज्यापुरोऽनुवाक्यादिः श्रौतः, होमसाधनः अग्नये स्वाहेत्यादिः स्मार्तः। कर्मानुष्ठानसमकालं प्रोच्यमानः क्रियमाणानुवादी। यथा—श्रौते यूपपरिव्ययणे, स्मार्ते च वस्त्रपरिधाने क्रियमाणे पठ्यमानः युवा सुवासा इत्यादिः। कर्मान्ते यस्योच्चारणं सोऽनुमन्त्रणमन्त्रः। यथा—श्रौते प्रयाजयागे कृते 'एको मम एका तस्य' इत्यादिः, स्मार्ते वैवाहिकसमञ्जनसमीक्षणमन्त्रादिः। जपतिजपेदित्यादिविधिवाक्यबोधित उच्चारणादृष्टफलो मन्त्रो जपमन्त्रः। यथा—श्रौते मयीदमित्यादिः, स्मार्ते च गायत्रीमन्त्रादिः। एष्वेवाभिमन्त्रणाप्यायनादिमन्त्राणामन्तर्भाव ऊह्यः। मन्त्रेष्वदृष्टफलदातृत्वं तु स्वरसंस्कारनियमात्।

मन्त्रार्थमुपजीव्य मन्त्रभेदास्त्वन्ये निरुक्तबृहद्देवतादिग्रन्थेषु द्रष्टव्याः। त इमे मन्त्रा ब्राह्मणभागाश्चर्षिभिर्दृष्टाः। ऋषयस्तु मानवातिरिक्ता एवेति याज्ञिकदृष्टिः। यतो हि ब्राह्मणग्रन्थेषु जन्मना सह जायमानेषु चतुर्षु ऋणेषु ऋषि-ऋणमपि परिगणितम्। अन्यत्रापि सर्वत्र साहित्ये मनुष्यभिन्नत्वेनोपदेशात् देवपितृमनुष्यजातिरिव काचन स्वतन्त्रा ऋषिजातिरिति याज्ञिकपीयूषपादाः। अतएव साम्प्रतिकादिमानवमनीषिप्रणीतेषु वेदवदाभासमानेषु वाक्येषु न वेदत्वम्, तेषामृषिदृष्टत्वाभावात्।

एवंविधस्य महिमातिशयशालिनो वैदिकवाङ्मयस्याध्ययनप्रस्तुत्युत्साहेऽस्मिन् गुरूणां प्राध्यापकानाञ्च कृपैव हेतुभूता। अत्रावसरे गुरुपरम्परायामस्मत्पितामहपादान् पितृपादांश्चाहं सश्रद्धं प्रणतिपुरस्सरं स्मरामि। आदरणीयैः मम प्राध्यापकैः श्रीवीरेन्द्रकुमारवर्मवर्यैः, श्रीविश्वनाथभट्टाचार्यचरणैः, श्रीश्रीनारायणमिश्रपादैः, श्रीयुगलकिशोरमिश्रमान्यैश्चाछात्रत्वादेवाहमाशीर्भिरध्यापनेन चाभिवर्द्धितः। अत्र तेषामाशीर्वचांसि तु ममाश्वस्तयेऽलं भवन्ति। पूज्यान् गुरून् नतीनां ततिभिः समभ्यर्थयतेऽयञ्जनः। संस्कृतसेवैकव्रतिनो विद्वदग्रेसरा अस्माकं श्रद्धाभाजनभूताः पण्डितश्रीकरुणापतित्रिपाठिवर्या उत्तरप्रदेशसंस्कृतअकादमीसंस्थाध्यक्षाः, यैरहं स्नेहाशिषा सततं संसिक्तस्तेषां चरणयोः सविनयं प्रणामाञ्जलयो विलसन्तु। तदीयाशीरनुग्रहेणैवेदं सम्पन्नम्।

किमु वच्मि सुहृद्वरिष्ठस्य डॉ० चन्द्रकान्तद्विवेदिमहोदयस्य कृते। नाहमाभारभारप्रदानेनौपचारिकेण तादृशं प्रीतिप्रकर्षं मर्यादयितुं कामये। नमस्कृतिभिरेव सभाजयामि श्रीद्विवेदिवर्यम्। एतत्पुस्तकप्रकाशनसाहाय्यप्रदानद्वारा लक्ष्मणपुरस्थया उत्तरप्रदेशसंस्कृतअकादमीसंस्थया उपकृतोऽस्मि।

तदर्थमनेकशः साधुवादाः । विषयसमालोचने पूर्वोत्तरपक्षयोर्येषां विदुषां विचाराः सङ्गृहीतास्तेषां महानुभावानामुपकारभार सादरं विभर्मि ।

विदुषां पुरस्तादुपस्थापितस्यास्यास्मत्पुस्तकस्य विषये मदीयोद्गारास्तु पूर्वाचार्योक्ता एवेमे भवन्ति —

शक्तौ स्थितायामथवास्थितायां मया प्रबोधार्थमयं प्रयत्नः ।
प्रारभ्यते भो विबुधाः क्षमध्वं, मात्सर्यहासे न सतां प्रवृत्तिः ॥

न शास्त्रवरुणालयोऽत्र सुगमो ह्यपारत्वतो,
निसर्गकरुणालयास्तु कृतिनो गुणाढ्यत्वतः ।
क्षितावखिलवन्न कश्च्युतिरपीह पुर्धमिका,
नतिः सकलमार्जमीति रचयामि विज्ञेषु ताम् ॥

वाराणसी
विजया दशमी २०४२ वि०

विद्वद्वशंवदः
श्रीकिशोरमिश्रः

# विषयानुक्रमः

**यजुर्वेदखण्डः**



**सामवेदखण्डः**



**अथर्ववेदखण्डः**



**चतुर्वेद-फलश्रुतिखण्डः**

श्रीः

सव्याख्यचरणव्यूहयुतम्

# वेदशाखापर्यालोचनम्

गणपतिमीशं करुणावरुणालयमन्तरायपूगहरम् ।
श्रीश्यामं भगवन्तं भवभयखेदच्छिदं वन्दे ॥

परमेशितुर्वेदपुरुषस्यानुग्रहेण भारतवर्षोऽयं समस्तानां ज्ञानविज्ञानानां मूलस्रोत: प्रकाशयन् दिव्यज्ञानवतां परमार्थदर्शिनां मानवोपकारैकलक्ष्याणां बहूनामृषीणामायतनं बभूव । सम्प्रदायक्रमेणार्षा उपदेशाः ग्रन्थविषया लिखितालिखिताश्चाद्यापि राष्ट्रमिदमुद्योतयन्ति । तत्र भारतीयभाषाणामेव किमु विश्वस्मिन् प्रसृतानां सर्वासां भाषाणां जननीवाप्याययन्ती संस्कृतभाषा तत्त्वज्ञैर्ऋषिभिस्तपस्विभिराचार्यैर्जीवनोत्सर्गिभिर्विद्वद्भिः समासेविताऽद्याप्यनितरसाधारणसमभिवृद्धवाङ्मयश्रिया विस्मापयति विपश्चितां मनांसि । मानवस्य स्थूलासु सूक्ष्मासु च सर्वविधासु जीवनचर्यासु, भूगोलखगोलयो, रहस्यप्रख्यापकेषु ज्ञानविज्ञानेषु च संक्षेपेण विकासेन वा पूर्वे आचार्याः तत्त्वमन्येभ्यः प्रादर्शयन् । तेष्वेव तत्त्वेषु. विभिन्नरूपस्य मानवाभिलाषस्य दर्शनं सुलभमेवेति सर्वेऽपि वयमनुभवामः । सर्वमपीदमभिलषितं नहि केवलं परिश्रमेण प्रजयाऽन्नोत्पादनेन वा स्रक्चन्दनताम्बूलादिवदुत्पादयितुं शक्यम् । अपरिपूर्णाभिलाषाश्च भारतीया मानवा मोघं जीवितं न मन्येयुरिति बुद्ध्या तत्त्वविद्भिर्ऋषिभिराचार्यैश्च वेदायुर्वेदतन्त्रमन्त्रयोगदर्शनादिशास्त्रजातं दृष्टमारचितं वा आत्मावबोधलक्ष्या अपि तत्त्वज्ञाः साधारणजनोपकाराय, शास्त्रेषु श्रद्धासमुदयाय, अनुमानानुभवमुखेन तत्त्वान्तःपरिशीलनाय, मानवीयक्षुद्राक्षुद्रकामनानामपि पूर्त्यै, इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायमकृत्रिमवेदवचसामाश्रयेण प्रादर्शयन् ।

वेदो नाम मन्त्रब्राह्मणेतिभागद्वयात्मकः शास्त्रोल्लिखितविविध-शाखोपबृंहितः श्रौतकर्मसु वृतहौत्राध्वर्य्यूद्गातृब्रह्माख्यपुरुषैः स्वस्वकर्तव्यनिर्वाहार्थं समाश्रीयमाणः ऋग्यजुःसामाथर्वनामभिश्चतुर्धा व्यवहृतः प्रमाणान्तरनिपेक्षः प्रभुसम्मितोऽकृत्रिमः सृष्ट्यादावेव सर्वप्रथमं ब्रह्मणो हृदये प्रत्यभिज्ञातः सृष्टिस्थितिक्रियानियमाववोधकः शब्दराशिः ।

सोऽयं वेदः सर्वशास्त्रमूर्द्धन्यः सबहुमानं सृष्टिमारभ्याद्य यावच्छासकवर्गैर्विद्वद्धौरेयैश्च समाश्रितः कुत्रचिद् विच्छिन्नपरम्परोऽपि विरलेन वाङ्मयेन समुपलभ्यते । तस्मिन्नेव वाङ्मये वैदिकशाखादीनां विस्तारबोधकं तत्सम्बद्धान्यविषयनिर्देशकञ्चेदं पुस्तकम् । तदत्र संक्षेपतो वेदपरिचयमुखेन वेदाङ्गपरम्परान्तः कश्चन विचारक्रम उपस्थाप्यते ।

## वेदस्य महत्त्वम्

भारतीयमान्यतानुसारं वेदः सृष्टिप्रपञ्चस्य प्राथमिकी वाणी वर्तते[1] । समग्रस्य सर्गक्रमस्य मूलं कारणं वेद एव[2] । किं बहुना, स्थावरजङ्गमात्मकस्यास्य जगतो धारणं पोषणञ्चापि शाश्वतेन वैदिकशब्दराशिनैव भवति[3] । साम्प्रतिके वैज्ञानिकेऽपि युगे समग्रस्य भूभागस्य प्राचीनतमो ग्रन्थः वेद एव मन्यते । मानवस्य मानवतायाश्च प्राचीनतमस्वरूपस्य परिज्ञानाय तद्विकासक्रमानुसन्धानाय च वेदानुशीलनमत्यावश्यकमेव भवति । विश्वस्य प्राचीनतमग्रन्थत्वात् समस्तानां संस्कृतीनामुद्गमस्थानत्वेन वेद एव निश्चेतुं शक्यते । अतो मानवजातेरितिवृत्तस्य, संस्कृतेः, भाषावैज्ञानिकविश्लेषणस्य च परिज्ञानाय वेदाध्ययनमपरिहार्यम् । भारतीयायाः संस्कृतेः सभ्यतायाश्च मूलस्रोतो वेदः सहस्राब्दात् सततं व्याख्यातोऽपि रहस्यगर्भः, स्वीयज्ञानगरिम्णादरणीयोऽद्यापि विराजते । भारतीयाः शास्त्रविदः स्वीयस्य सिद्धान्तस्य वेदमूलकत्वं साधयन्तो वेदं प्रति स्वीयां श्रद्धां तत्प्रामाणिकतां च सुदृढं प्रदर्शयन्ति । पाश्चात्त्या बहवो मनीषिणोऽपि वेदवाङ्मयानुशीलने कृतजीवनोत्सर्गाः "निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति प्राचीनमुद्घोषं साम्प्रतिकेऽपि काले नूनं परिपोषयन्ति ।

---

१. यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै (श्वे० उ० ६।१८)
वाणीयं वेदसंज्ञिता, मयादौ ब्रह्मणे प्रोक्ता (भा० ११।१४।३)

२. सर्वं वेदात् प्रसिद्ध्यति (म० १२।९७, द्र० १२।९८)

३ बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् (म० १२।९९)

## वेदस्य भागद्वयम्

सामान्यतया मन्त्रब्राह्मणरूपेण द्विधा वेदस्य विभजनं प्राचीनाचार्यैः कृतमस्ति[1]। मन्त्रात्मकस्य वैदिकशब्दराशेः मुख्यं सङ्कलनं संहितेतिनाम्ना प्राचीनकालाद् व्यवहृत भवति। संहितात्मक वैदिकशब्दराशिमेवाधृत्य पदक्रमविकृतिपाठाः भवन्ति। यज्ञेषु प्रायशः संहितोक्तमन्त्राणामेव प्रयोग उपदिष्टः[2]। आचार्यभट्टभास्करस्य मतानुसार—कर्मणां, कर्मणि विनियुक्तानां मन्त्राणाञ्च व्याख्यानग्रन्थाः ब्राह्मणत्वेन व्यवह्रियन्ते[3]।

## ब्राह्मणभागः

ब्राह्मणशब्दो मानवजातिविशेषे विप्रापरपर्याये वर्णात्मकेऽस्ति रूढः। अन्यस्तु ब्राह्मणशब्दो वेदैकभागवाची। जात्यवबोधको हि ब्राह्मणशब्दः पुंसि, वेदार्थकश्च क्लीबे प्रयुज्यत इत्यस्ति महान् भेदः। 'मन्त्रब्राह्मणयोर्वेद-नामधेयम्' इत्यार्षपरिभाषया मन्त्रो ब्राह्मणमिति द्वौ भागौ वेदस्य वर्त्तेते इत्युक्तम्। आरण्यकमुपनिषदित्येतावपरौ यौ भागौ प्रसिद्धौ तौ तु ब्राह्मणान्त-र्गतावेव मन्येते। आरण्यकं तु पूर्णमेव ब्राह्मणान्तर्गतम्। काश्चन उपनिषदः ईशावास्यप्रमुखा मन्त्रभागे सन्ति। अथापि बहुशः उपनिषदां ब्राह्मणभागे एवोपलब्धिर्दृश्यते। फलतो मन्त्रब्राह्मणात्मकं भागद्वयमेव वेदस्यास्तीति सूक्तं भवति। तत्र याज्ञिकसमाख्यानं मन्त्रत्वेन यत्र प्रसिद्ध्यति स वेदभागो मन्त्रः, तदतिरिक्तश्च वेदभागो ब्राह्मणपदाभिधेय इति मीमांसकैर्निर्णीतम्[4]। याज्ञिकास्तु—"कर्मस्वरूपबोधको वेदभागो ब्राह्मणम्, कर्मानुष्ठानौपयिक-प्रयोक्तव्यो वैदिकशब्दराशिर्मन्त्रः" इत्येवं प्रायिकत्वेनाभिप्रयन्ति।

एवञ्च ब्राह्मणं विना श्रौतकर्मणि प्रवृत्तिरेव न सम्भवति, सर्वेषां विधिवाक्यानां ब्राह्मणभाग एव समाम्नातत्वात्। विधिवाक्यपरिज्ञातानाञ्च कर्मणां प्रयोगक्रमोऽनुष्ठापनप्रक्रिया च ब्राह्मणेनैव ज्ञातुं शक्यते। अतोऽलौ-किकश्रेयःसाधनीभूतानां कर्मणां विज्ञापकः प्रवर्त्तकश्च वेदभागो ब्राह्मणमिति फलति। केचिन्मनीषिणो याजनाधिकारिणो ब्राह्मणवर्णस्योपयोगिनं वेदभागं

---

१. मन्त्रब्राह्मणयोर्वेदनामधेयम् ( प्र० परि० १।२, आप० परि० ३०, सत्या० श्रौ० १।१ ७, बौ० गृ० २.६।३ )

२. अपि च यज्ञकर्मणि संहितयैव विनियुज्यन्ते मन्त्राः ( नि० १।७ दुर्गभाष्ये )

३. ब्राह्मणं नाम कर्मणस्तन्मन्त्राणाञ्च व्याख्यानग्रन्थः ( तै० सं० १ ५।१ भाष्ये )

४. तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः ( जै० २।१।३२-३३ )

ब्राह्मणत्वेनाभिप्रयन्ति[1]। अतएव याज्ञिकपीयूषपादैर्ब्राह्मणपदमेवं व्युत्पादितम्—"ब्रह्मणा मन्त्रेण प्रतिपाद्यो विषयः ब्राह्मः, (आम्नायस्य क्रियार्थत्वात् क्रियारूपोऽपि) तं ब्राह्मं नयति सम्यग् विधानेनोपदेशनाधिकारिषु ज्ञापयतीति ब्राह्मणजातिर्ग्रन्थश्च। ग्रन्थे नपुंसकः शब्दप्रयोग इति विशेषः।

चतुर्षु वेदेषु प्रत्येकं सन्त्यनेकशाखाः, यासामुल्लेखो भगवता पतञ्जलिना 'एकशतमध्वर्युशाखाः, एकविंशतिधा बाह्वृच्यम्, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः' इत्येवं कृतः[2]। तत्र प्रत्येकं शाखासु मन्त्रब्राह्मणात्मकेन वेदेनावश्यं भवितव्यम्। परमद्यत्वे कानिचन ब्राह्मणान्येव दृग्गोचरीभवन्तीति कालस्य लीलायितमेव। ब्राह्मणवाङ्मयविषयकं वक्तव्यमन्यद् भूमिकाभूयस्त्वभिया वार्तान्तरत्वाच्च नात्रोच्यते।

## आरण्यकम्

द्विजानामासमन्तात् साकल्येन साधु वा रण्यं रमणमानन्दाधायकमिति सद्विचारसङ्ग्रहात्मकं शास्त्रमारण्यकम्। अथवा आ सर्वेषां रण्यं रमणीयमारण्यम्। आरण्यमेवारण्यकम्, स्वार्थे प्रत्ययः। ब्राह्मणग्रन्थेषु हि श्रौतकर्मकलापस्याधिभौतिकक्रियारूपेणैव मुख्यतः समुल्लेख इति न सर्वेषां कृते रुचिमावहति। आरण्यकेषु तु यज्ञानामाध्यात्मिकमाधिदैविकमपि व्याख्यानम्। तच्च कर्मकाण्डाशक्तस्य तद्रुचिविरहितस्यापि वा पुरुषस्य रुचिरमाचरति, यज्ञप्रक्रियायास्तत्त्वान्वेषणे चानन्दमावहति।

तैत्तिरीयारण्यकव्याख्याने सायणार्येणारण्येऽध्येतव्यमिति कारणेनारण्यकसंज्ञापनमिति कल्पितम्[3]। परमेतन्मतं दुर्बलमेव प्रतिभाति। यतो हि संहितोक्ताः कपितये मन्त्राः[4] कर्माण्यपि[5] कानिचिदरण्ये प्रयोक्तव्यत्वेन निर्दिष्टानि। अन्ये त्वाधुनिका मनीषिणो वानप्रस्थाश्रमिणां यज्ञविवरणमारण्यक ग्रन्थेषु वर्तत इत्येवं परिचाययन्ति[6]। तदप्यविचारितरमणीयमेव। यतो

---

१. द्र० वैदिकसाहित्ये रामगोविन्दत्रिवेदिकृते पृ० १२३

२. म० भा० पस्पशाह्निके

३. अरण्याध्ययनादेतदारण्यकमितीर्यते।
अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते ॥ (तै० आ० भा० श्लोक ६)

४. ऋा० सं० ३९७

५. कौ० गृ० १०६।२

६. द्र० वैदिकसाहित्ये रामगोविन्दकृते पृ० १५८

वानप्रस्थाश्रमिभिर्दर्शपूर्णमासाद्या इष्टयस्सर्वा नित्याः कर्तव्या एव। परमारण्यकेषु नेमा इष्टय उपदिष्टाः। एवमेव सोमचातुर्मास्यादयो यागा वानप्रस्थिनामसङ्ग्रहित्वाद् याज्ञवल्क्यदिशा अकरणीया प्रतिभान्ति[1]। परमाण्यकग्रन्थेषु तु सोमस्योत्तरक्रतूनाञ्चैव विशेषतया विवेचनमस्ति। बृहदारण्यके गर्भाधानप्रकरणमप्युक्तं[2], तच्च वानप्रस्थाश्रमे ब्रह्मचर्याचरणान्नोपयुक्तं न च सम्भवम्। अतो वानप्रस्थकरणीययज्ञानां विवरणमारण्यकेष्वित्युक्तं न युज्यते।

## उपनिषद्

उपनिषच्छब्दो विषयमनुलक्ष्य प्रवृत्तः। उपगम्य गुरुं निषद्य व्रते स्थित्वा ब्रह्मतत्त्वं ज्ञायते येनासौ वेदभाग उपनिषद्। अतएव समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिः श्रूयते[3]। अथवा उप समीपं निषद्य स्थित्वैकगोष्ठ्यां परस्परं क्रियमाणायां चर्चायामुपदेशप्रदविषयाणां ब्रह्मतत्त्वस्य च दिव्यसङ्ग्रहरूपग्रन्थ उपनिषदाख्यः। ता ब्रह्मतत्त्वप्रतिपादिका उपनिषदो मन्त्रब्राह्मणोभयभागयोः समुपलभ्यन्ते।

प्रकरणानुग्रहादत्र किञ्चिद् विविच्यते। पूर्वमीमांसकसम्प्रदाये विधि-मन्त्र-नामधेय-निषेधा-र्थवादभेदेन पञ्चधा वेदशब्दराशिवर्गीकृतः[4]। पञ्चस्वप्येतेषूपनिषद्भागस्य सन्निवेशनं पूर्वमीमांसानुग्रहेण दुश्शकम्। तेन च भवितव्यमेव, तदन्तरा उपनिषद्भागस्यावेदत्वापत्तेः। यथाकथञ्चिद् द्राविडेन प्राणायामेनोपनिषदां पञ्चान्यतमत्वं पूर्वमीमांसादृशा साध्यते चेन्नास्मभ्यं रोचते, ज्ञानकाण्डस्य महत्त्वव्याघातापत्तेः। अतो याज्ञिकसम्प्रदायानुरोधेन वेदशब्दराशेः षोढा विभागोऽस्मदभिमतः। अत्र याज्ञिकवर्यस्य मित्रमिश्रविदुषः—"श्रुतिः षड्भागा, विधिनिषेधार्थवादमन्त्रनामधेयोपनिषद्भेदात्[5]" इयमुक्तिर्युक्तास्माभिः समादरणीया च भवति।

तत्रोपनिषदां बहुत्वेऽपि दश एवोपनिषदः उपनिषत्साहित्यमौलिभूताः श्रीमच्छङ्करभगवत्पादेन व्याख्याताः सर्वजनसमादृताश्च। तथा च संग्रह कारिका—

---

१. तु० अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा।
अर्थस्य संचयं कुर्यात् कृतमाश्वयुजे त्यजेत्॥ (या० स्मृ० प्रा० ४७)
एवञ्च—त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबद् द्विजः इति।

२. बृ० आ० ८।४

३. मुं० सा०

४. पूनाप्रकाशितार्थसंग्रहपृष्ठम् ३१

५ वी० मि० सं० प्र० पृ० १०

ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥

## वेदविभजनम्

प्राचीनभारतीयवाङ्मयस्य निर्देशेन ज्ञायते यत् सृष्टेः प्रारम्भकाले ऋग्यजुःसामाथर्वात्मको वेद एकत्र सङ्कलित आसीत् । सत्ययुगे त्रेतायुगे द्वापरस्य चावसानसमीपं यावदेकरूपस्यैव वेदस्याध्ययनाध्यापनक्रमः प्रचलित् आसीत् । द्वापरयुगस्य समाप्तेः कतिपयवर्षेभ्यः प्राङ्महर्षिव्यासो भाविनि कलियुगे जनानां बुद्धिशक्त्यायुषां ह्रासस्थितिं स्वीयया दिव्यदृष्ट्यावबुध्य ब्रह्मपरम्परया प्राप्तस्यैकात्मकस्य वेदस्य यज्ञक्रियानुगुणं विभागचतुष्टयं चकार[1] । एतेषु चतुर्षु हौत्रकर्मोपयोगिनां क्रियामन्त्राणां सङ्कलनं ऋग्वेद इतिनाम्ना, आध्वर्यवकर्मोपयोगिनां क्रियामन्त्राणां सङ्कलनं यजुर्वेद इतिनाम्ना, औद्गात्रकर्मोपयोगिनां क्रियामन्त्राणां सङ्कलनं सामवेद इतिनाम्ना, शान्तिकपौष्टिकाद्यभिलषितफलकर्मोपयोगिनां क्रियामन्त्राणाञ्च सङ्कलनमथर्ववेद इतिनाम्ना व्यवह्रियते ।

सम्प्रति प्रवर्त्तमानस्य वेदशब्दराशेः वैवस्वतमन्वन्तरे कृष्णद्वैपायनेन महर्षिणा व्यासेन कृतमिदमष्टाविंशं विभजनमस्ति । अर्थात् पौराणिकमान्यतानुसारमेकसप्ततिचतुर्युगाणामेकं मन्वन्तरं भवति । प्रत्येकं चतुर्युगस्य मध्ये द्वापरसमाप्तिकाले विशिष्टतपःसम्पन्नैर्महर्षिभिरेकात्मकस्य वेदस्य चतुर्धा विभजन क्रियते[2] । विभजनमिदं कलियुगार्थमेव प्रवर्त्तते, कलिसमाप्तौ च समाप्यते । सम्प्रति मन्वन्तरेषु सप्तमस्य वैवस्वताभिधस्य मन्वन्तरस्याष्टाविंशतितमः कलियुगः प्रचलति । अतःपूर्वं सप्तविंशतिः कलियुगास्तदनुसारञ्च सप्तविंशतिर्वेदविभागकर्त्तारो वेदव्यासा विभिन्नाभिधेया बभूवुः[3] । वेदस्येदमुपलब्धमद्यतनं विभजनं महर्षेः पराशरस्य पुत्रेण कृष्णद्वैपायनेन कृतमस्ति[4] । वेदविभागकरणादेव स महर्षिर्वेदव्यास इत्युपाधिना विभूषिता भवति ।

---

१. द्र० भा० १।४।१६-२०

२. चतुर्युगेष्वथ व्यस्ता द्वापरान्ते महर्षिभिः ( भा० १२।६।४६ )
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ( भा० १२।६।४७ )

३. द्र० ब्र० पु० २।३५।११६-१२४; वा० पु० अ० २३

४. द्र० भा० १२।६।४८-४९

## वेदस्य शाखाः

कृष्णद्वैपायनो महर्षिर्वेदव्यासो वेदं चतुर्धा विभज्य तं चतुर्भ्यः शिष्येभ्यः समध्यापयत्। तेषु पैलनाम्ने शिष्यायर्ग्वेदं, वैशम्पायनाय यजुर्वेदं, जैमिनये सामवेदं, सुमन्तवे चाथर्ववेदमध्यापयत्[१]। श्रीमद्भागवतानुसारं वेदस्येदं विभजनमपि कालान्तरे मानवस्य धारणाशक्तिवृद्ध्यादीनां ह्रासोन्मुखतया दुर्ग्राह्यतामगात्। ततो व्यासशिष्याः पैलवैशम्पायनजैमिनिसुमन्तवः स्वशिष्येभ्यस्ते च शिष्याः स्वशिष्येभ्य एकमेकं वेदं बहुधा शाखासु विभज्याध्यापयामासुः[२]। अतश्च प्रतिवेदं विभजनेनानेन प्रत्येकशाखायाः साम्प्रतिकं मानवग्राह्यरूपमभवत्। प्रत्येकमपि शाखा स्वकलेवरे पूर्णा न चान्यां शाखामपेक्षते। रामायणमहाभारतादिग्रन्थेषु एकं पर्व काण्डं वा परं प्रति सापेक्षत्वात् ग्रन्थस्यैकभागत्वं लभते। परं शाखाः न वेदस्यैकभागत्वेनाभिधातुं शक्यन्ते। यतो हि प्रत्येकं शाखा शाखान्यनैरपेक्ष्येण स्वोपदिष्टकर्मणां पूर्णं विधानमभिदधाति। अतश्चैकशाखाध्ययनेनैव तत्तद्वेदस्य पूर्णाध्ययनमाचार्या अभिप्रयन्ती[३]त्यादिकं शाखाभेदमुपरिष्टाद् विमक्ष्यामः।

महाभाष्यकृतः पतञ्जलेर्निर्देशानुसारं चतुर्णां वेदानां समग्राः शाखाः सम्भूय एकत्रिंशदधिकैकादशशतसङ्ख्याकाः (११३१) सन्ति। तास्वृग्वेदस्यैकविंशतिः शाखाः, यजुर्वेदस्यैकाधिकं शतं शाखाः, सामवेदस्य सहस्रं शाखाः, अथर्वणश्च नव शाखाः सन्ति। अद्यत्वे न समस्ताः शाखा उपलभ्यन्ते। मुख्यतया सम्प्रति त्रयोदशानां शाखानां संहिताः प्राप्यन्ते, ताश्च यथा— ऋग्वेदे शाकलशाङ्खायनशाखे इति द्वे, यजुर्वेदे (शुक्ले) काण्वमाध्यन्दिनीयशाखे इति द्वे, (कृष्णे) तैत्तिरीयमैत्रायणीयकठपिष्ठलशाखा इति चतस्रश्च, सामवेदे कौथुमजैमिनीयराणायनीयशाखा इति तिस्रः, अथर्ववेदे च शौनकपैप्पलादशाखे इति द्वे। एवं सङ्कलनया त्रयोदश संहिताः उपलभ्यमानाः।

## पौराणिकदृशा वेदपरम्परेतिहासपर्यालोचनम्

वेदानां चतुर्धा विस्तारः, शुक्लकृष्णत्वेन पुनर्विभागो यजुषां, सम्प्रदायद्वैविध्यञ्चेति विषयाः आख्यानव्याजेन भृशं पुराणेषु विवेचिताः[४]।

---

१. द्र० भा० १।४।२१-२२, १२।६।५०-५३

२. द्र० भा० १।४।२३-२४; १२।६।५४-५९, ६७, ७४-८०; १२।७।१-३

३. एकशाखाध्ययनेनैव एकस्य वेदस्य समग्राध्ययनत्वम् (का० श्रौ० भू० पृ० १२ सरलाकारः) द्र० स० प्र० शि० पृ० २७

४. भा० १२।६ वि० पु०, सू०सं०, स्क० पु०, वा० पु० अ० ६१

अतस्तद्दृशा एवात्र विशयाः समाधातुं निश्चेतुं च शक्यन्ते। पुराणेषु कस्मिन्नप्याख्याने ऐतिह्ये चर्चायां वा परस्परं महद्वैभिन्यं प्राप्यते, तस्माच्च मूलविषयविवेचने विसङ्गतयस्समुद्भवन्ति। पुराणानां सैद्धान्तिकी अध्ययनाध्यापनपरम्परा बहोः कालाद् विशृङ्खलिताधुनापि लुप्तप्राया वर्तते। अतएव युक्तितर्कतारतम्यविरहितानां विशयानां समाधानं न सुकरम्। प्राचीने काले शास्त्रान्तराणामिव पुराणानामप्यध्ययनस्य विचारपुरस्सरा परम्परा प्रचलितासीदिति सङ्केतरूपेण पुराणेष्वेवोक्तेनावबुध्यते[1]। वेद-प्रादुर्भाव-शाखाविस्तारविषयोऽप्येवमेव पुराणेषु बहुविधो दृश्यते। वयमत्र विषयानेतान् पुराणोक्तविवरणानुसारेण विचारयामः। एतेषु प्रायशोंऽशाः समवाप्तप्रमाणसरणीकाः, शेषाश्च प्रकल्पिताः, कतिपये मृग्यमूलाः। अनुसन्धातृभिर्विद्वद्भिस्तत्रालोकप्रदानेन पन्था उद्घाटनीयः।

## विभजनं शाखाविस्तारश्च

प्रत्येकं द्वापरयुगस्यावसाने वेदाश्चतुर्धा विभज्यन्ते व्यासेन[2]। कलि-युगे यथाकालमध्येतॄणां प्रमादवशाद् वा साधनानामभावेन हेतुना वा वेदशाखाः क्रमशो लुप्यन्ते। तथापि विलुप्तशाखानां पाठाः कैश्चिदृषिभिः संरक्ष्यन्त इति मन्तव्यमेव भवति पुराणपरम्परायाम्। ऋषयो हि दीर्घत-रायुषः साम्प्रतिकमानवैः सर्वथा भिन्नाः स्वजीवनवृत्तौ व्यवहारे च भवन्तीति पुराणाध्ययनेनावगम्यते। अतएव वेदाध्यायिनस्तत्त्वदृशो महर्षयो यत्र जनसामान्यस्यावागमनं किमु वा दर्शनमपि न सम्भाव्यते तत्र पुण्यारण्येषु तपश्चरन्ति, कलिसमाप्तौ सत्ययुगे चात्मानुरूपं वातावरणं सम्प्राप्य मानवानां दृष्टिपथमवतरन्ति। तस्मिन् काले योग्यान् सुपात्रशिष्यानवगत्य स्वीयं संरक्षितवेदराशिमध्यापयन्ति, पुनः प्रचारयन्ति चैवम्। प्रत्येकं कल्पे महर्षेर्वेदव्यासस्याविर्भावात्पूर्वभवे काले समग्रशाखापरिबृंहितस्य वेदचतुष्ट-यस्याध्ययनमेकया व्यक्त्या कर्तुं पार्यत इत्यस्ति पुराणसम्मतम्[3]। नेदं वेदचतुष्टयस्याध्ययनं वेदक्रमेण शाखाक्रमेण वा, अपितु यज्ञप्रक्रियाक्रमेणेति सुवचं भवति। एकस्मिन् मन्त्रे शाखादिभेदेन कियन्तः पाठाः कया आनुपूर्व्या कियतां मन्त्राणां न्यूनाधिक्येन सन्तीति परिज्ञानमेकस्यैव जनस्य मेधाशक्ति-वैशिष्ट्येन सम्भवति। यथेदङ्कालेऽपि मुद्रितग्रन्थेषु टिप्पण्यादिभिः

१. ब्र० भा० १२।७।५-८, १२।१०.३७ आदि

२. ब्र० भा० १२।६।४६-४७

३. ब्र० भा० १।४।१६-२०

पाठान्तरादीनां परिज्ञानं भवति। यथा वा सहस्राद्यवधानिनां सन्निधानमद्यत्वेऽपि दृश्यते। यद्यप्येवंविधाया अध्ययनशैल्याः स्मृतिविशेषताया वा न पुराणेषु स्पष्टमुल्लेखः। परन्तु प्रातिशाख्यादिग्रन्थानामनेकशाखामूलकेन प्रणयनेनेदं प्रमाणित भवति यदेक एवाचार्यः ऋषिर्वा समस्तानामनेकासां वा शाखानां पाठक्रमानुपूर्व्याः परम्परायाश्च विज्ञाता भवति स्म।

अध्यापनविधावेकरूपे वेदराशौ चतुर्णामृग्यजुःसामाथर्वणामस्तित्वं किंरूपं सम्भवतीति विचारणीयम्। सर्वत्र वेदानां चतुस्संख्यया परिगणनप्रसिद्ध्या आदिपुरुषस्य ब्रह्मणोऽपि चतुर्णामेव वेदानां स्मरणं स्मर्यते। न चैतेनैकात्मकवेदाध्यापनस्य मतमिदं व्याहन्येतेति वाच्यम्। अत्र याज्ञिकदृष्ट्या समाधानं सुलभम्[1]। ततश्चैवमुत्प्रेक्षणम्—हौत्रप्रतिपादकं वेदांशमृग्वेदसंज्ञया, आध्वर्यवप्रतिपादकं वेदभागं यजुर्वेदाभिधानेन, औद्गात्रप्रतिपादकं वेदशब्दराशिं सामवेदसमाख्यया, ब्रह्मत्वरक्षाकर्मणोश्च प्रतिपादकं वेदमन्त्रगणमथर्वणः नामधेयेन पूर्वमाचार्याः समुपादिदिशुः। चतुर्णां यज्ञर्त्विजां नामकर्मानुसारं वेदस्वरूपचतुष्टयस्यर्ग्वेदे[2] प्रतिपदमुक्तत्वान्मतस्यास्य मान्यत्वे न सन्देहो युज्यते। समग्रमेकं वेदं महर्षिर्वेदव्यासश्चतुर्धा विव्यास[3], यज्ञियकर्त्तव्यक्रमेणैव तद् विभजनं, न किल शाखात्मकमासीत्[4]। प्रत्येकमपि वेदः स्वसम्बद्धसमग्रशाखाज्ञानयुतः एकरूप एवासीत्। व्यासश्चैकमेकं वेदं प्रत्येकं शिष्याय समध्यापयत्[5]। चतुर्णामेतेषां प्रामुख्यं भजतां शिष्याणामध्यापनप्रणालिका द्विप्रकारा प्राचलत्। प्रथमायां सर्वशाखाभेदज्ञापकस्यैकस्यैव वेदस्य संहितारूपेण बहुकालं यावच्छिष्यपरम्परायामध्यापनमभूत्[6]। कालान्तरे च गुरुभिर्भिन्नवर्गेषु शाखासंहिता विभज्य शिष्याणां धारणाशक्तिमभिलक्ष्यैकशाखापाठाध्यापनक्रमेण वेदराशिरुदिष्टः[7]।

द्वितीयस्याञ्च प्रणालिकायां वेदव्यासशिष्येणैव शाखाः वर्गीकृत्य स्वशिष्येभ्यो भिन्नभिन्नशाखावर्गाः समध्यापिताः[8]। ततः कालान्तरेण वर्गाचार्यैस्तैः शिष्याणां धारणाशक्तिमाधृत्य पृथक्पृथक् शाखापाठास्तेभ्यः

---

१. द्र० भा० १२।६।४३-४५, विशेषतः–चातुर्होत्रविवक्षया (४४), भा० १।४।१९
२. ऋ० १०।७१।११  ३. भा० १२।६।४६-४९ वि० पु० अनन्तभाष्येऽपि
४. द्र० भा० १।८।२३, १२।६।५०, स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी, शाबरभाष्ये।  ५. भा० १२।६।५१-५३; १।४।२१-२२
६. द्र० भा० १२।६।५४-६१, ६४-६५; १२।७।१-३
७. भा० १२।६।५५-६०  ८. भा० १२।६।७५

स्पष्टमुपदिष्टा:[१]। शुक्लयजुर्वेदिनो याज्ञवल्क्यस्यर्षेः द्वितीयप्रणालिकया प्रवचनकर्तृत्वं तर्क्यते। यतो हि तेन शुक्लयजुर्वेदस्य पञ्चदशशाखानामध्ययनमेकया संहितया कृतम्[२]। स्वयमेव च स प्रत्येकं शाखापाठं पञ्चदशभ्यः शिष्येभ्यः पृथक् पृथगुपदिदेश[३]। भागवतोक्त्या इदमपि ध्वन्यते यत् प्रत्येकं प्रशिष्याय एकस्या एव शाखाया अध्यापनार्थं स्वशिष्यानादिदेश। एवं हि सर्वासु शाखासु गुरुमुखोच्चारणानूच्चारणस्याविच्छेदः[४]।

अत्रेदमप्यवधेयं भवति-वेदात्मा खलु भगवान् सूर्यनारायणः[५]। तत्र भवतः आधिदैविको विग्रहः शाखाकलापयुक्तानां वेदानां शाश्वतज्ञानाकर इति न चित्रम्। वेदव्यासात् पूर्वं शुक्लयजुः पञ्चदशशाखात्मकं पृथ्वीतले प्रसृतमासीत्। किन्तु वेदव्यासेनर्षिणा त्रिकालज्ञतया भविष्यति याज्ञवल्क्यघटनाया महत्त्वं शुक्लकृष्णभेदवैशिष्टचञ्च प्रकाशयितुं वेदविभजने पठनपाठनपरम्परायाञ्च शुक्लयजुषः पञ्चदशशाखाः नोपदिष्टाः[६]। इदमेव—"शुक्लयजुषः पञ्चदशशाखाः भगवतः सूर्यस्य सन्निधौ याज्ञवल्क्याध्यापनार्थं वेदव्यासेन प्रहिताः"—इति रूपकेणोक्तम्[७]।

याज्ञवल्क्यकाले जनेषु याः शाखाः प्रसिद्धास्ता याज्ञवल्क्यदृष्ट्या यातयामशाखाः अप्रसिद्धाश्चायातयामाः इति विशेषः[८]। महर्षिणा याज्ञवल्क्येन शुक्लयजुर्वेदीययज्ञक्रियोपयोगिनोः हौत्रौद्गात्रकर्मणोः परिज्ञानायान्याः शाखा अप्यधीता अध्यापिताश्चासन्[९]। अर्थात् चत्वारोऽपि वेदाः

१. भा० १२।६।७४

२. भा० १२।६ ७३

३. भा० १२।६।७४

४. भा० १।४।२४

५. श० ब्रा० १०।५।२।१, नमः सवित्रे···ऋग्यजुःसामरूपाय (वि०पु०च०व्यू० ३७)

६. अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः (वि० पु० च० व्यू० ३७)

७. अयातयामानि तु भानुगुप्तान्यन्यानि जातानि तु नीरसानि।
यजूंषि तेषामथ याज्ञवल्क्यो ह्ययातयामानि रवेरवाप॥ दे० भा० ९।५

८. अहमयातयामयजुःकाम उपसरामीति (भा० १२।६ ७२ याज्ञवल्क्योक्तिः)

९. याज्ञवल्क्यस्ततो ब्रह्मञ्छन्दांस्यधिगवेषयन्।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम्॥ (भा० १२।६।६६)

स्वगुरोः सूर्यस्य सकाशाद् याज्ञवल्क्येनाधीता:[1] । अतएवर्चां शाङ्खायनीया, शुक्लयजुषां पञ्चदश, साम्नां कौथुमी, अथर्वणाञ्च शौनकीयेति शाखाः आदित्यसम्प्रदायान्तर्गता याज्ञिकैः स्मर्यन्ते, एतासां प्रवक्तारश्च याज्ञवल्क्य-शिष्याः ।

यथा वेदव्यासेन्द्रमन्वादिनामानि कर्मविशेषानुगुणतया पदविशेषद्योत-कानि, तथैव याज्ञवल्क्यवाजसनेयाद्यभिधानान्यपि शुक्लयजुषो मूलाध्येतृ-प्रवक्तॄणामुपाधय एवेति वयं मन्यामहे। वेदेषु यानि व्यक्ति-स्थान-पदार्थ-मनोभावादीनां नामान्युपलभ्यन्ते तान्यनादीनि पुरुषबुद्धिप्रयत्ननिरपेक्षाणीति सर्गक्रमविकासे संज्ञाकरणापेक्षायां सत्याम् ऋषयो विद्वांसः वेदनिष्ठश्रद्धया-भिभूता यत्किञ्चिद् गुणधर्मादिसादृश्यमभिलक्ष्य वेदगतशब्दानेव व्यक्ति-स्थान-पदार्थ-भावादिषु संयोजयन्ति। दृश्यते च प्राचीनैरेव रोहिण्यादिशब्दैः सम्प्र-त्युपग्रहादीनां संज्ञाकरणम्। एवं हि याज्ञवल्क्यादिशब्दानां वेदोपलम्भत्वे न विप्रतिपत्तिः ।

पौराणिकाख्यानात् पूर्वमप्यध्ययने यजुषां शुक्लकृष्णत्वेनासीद् द्वैविध्यम्। तत्र शुक्लपक्षस्य चतुर्दशीयुक्ताया श्रावणपूर्णिमाया वेदोपाकर्मणि ग्रहणात् शुक्लत्वम्, भाद्रकृष्णस्य प्रतिपद्युतायाश्चोपादानात् कृष्णत्वमिति विचारसंक्षेपः[2] । शुक्लयजुषः शाखास्तदध्येतारश्च पूर्वमपि वाजसनेयशब्देन संज्ञिताभूवंस्तत्र च प्रवृत्तिनिमित्तं भिन्नमासीत्। याज्ञवल्क्यानन्तरञ्च वाजस-नेयशब्दस्य प्रवृत्तिनिमित्तमन्यदपि जातमित्युपरिष्टाद् यथार्हं वक्ष्यामः ।

## शाखाविमर्शः

अथ प्रसङ्गप्राप्तः शाखाविस्तारविषयोऽपि किञ्चिद् विविच्यते। शाखाशब्दः पणिनीयोक्ताद् व्याप्त्यर्थकात् 'शाखृ' धातोः[3] निष्पादयितु

१. इत्युक्तो भगवान् सूर्यो याज्ञवल्क्यं महामुनिम् ।
वेदान् षडङ्गसहितान् रहस्यादिसमन्वितान् ।
चतुरोऽध्यापयामास ... ... ... । ( आत्मपु० ७।३८ )
कर्णे पठद् ततो वेदांश्चतुरोऽपि च तन्मुखात् । ( स्कंदपु० ना० २३८ )
श्रीमच्छङ्करभगवत्पादैरपि बृहदारण्यकोपनिषद्भाष्ये (३।१।२) याज्ञवल्क्यपेश्चतुर्वेद-वित्त्वमुपदिष्टम् ।

२. च० व्यू पृ० ३७ टीकायां महिदासः

३ पा० धा० १२६ भ्वा०

शक्यते। परं निरुक्तकृद् यास्कः शाखापदनिर्वचनेप्रसङ्गे नेमं धातुमुपयोजयति[1]। तेन शाखापदे भागद्वयं मत्वा शाखाः खशयाः इत्युल्लिखितम्। अस्याशयो यत् खे आकाशे (अन्तरिक्षप्रदेशे) शयनं प्रसरणं शीलं यासां ताः शाखाः। निर्वचनमिदं वृक्षावयवानां शाखानां स्थितिमनुलक्ष्य कृतम्। खेऽन्तरिक्षे शयाः प्रसृता हस्तरूपाः शाखाः, शक्नोतेर्वेति निर्वचनान्तरं यास्कोक्तम्। उभयविधोऽप्यर्थो यास्कोक्तो वृक्षशाखायां सङ्गच्छते। परमेकवेदान्तर्गतस्य परम्परया भिन्नस्य मन्त्र-ब्राह्मणा-रण्यको-पनिष-च्छिक्षा-कल्पसूत्रादिरूपवाङ्मयस्य कृते शाखाशब्दव्यवहारो यास्कनिर्वचनानुसारेण चिन्तनीयतामेति।

वेदशाखावबोधकस्य शाखापदस्य तु शाखृव्याप्तौ धातोरेव व्युत्पादनेन भावसङ्गतिः। शाखति व्याप्नोति धर्मोत्पादिकां क्रियां सा वेदवाणी शाखा, एवविधविवरणेन शाखापदं वेदस्वरूपानुकूलं भावमभिव्यनक्तीत्यस्माकं विमर्शः। यथा लोके कस्यापि कर्मणः सम्पूर्त्यै नैकविधाः प्रकाराः सम्भवन्ति, तथैवाग्निहोत्रदर्शपूर्णमासादियज्ञानामपूर्वोत्पादनाय (पुण्योत्पत्तये) शाखासु प्रयोगाणां मन्त्राणाश्चानादिपरम्परासिद्धं नानाविधत्वमपि नाव्यावहारिकं न चासङ्गतम्। एतदेव च शाखाभेदस्य रहस्यमिति सुवचम्।

लोके शाखाशब्देन कस्यचन पदार्थस्यावयव इत्येवं सामान्यतोऽर्थो ज्ञायते। यद्यप्ययमर्थो न शब्दतो निष्पाद्यते, अथापि केचन "एकविंशतिधा बाह्वृच्यम्, एकशतमध्वर्युशाखाः"—इत्यादिवाक्यानां विवरणे ऋग्वेदीयादिशाखासु महाभारतीयपर्ववद् रामायणीयकाण्डवद् वेति दृष्टान्तमुखेनावयवे शाखाशब्दं व्यवहरन्तो दृश्यन्ते। परं वेदशाखास्ववयवत्वं नास्ति, प्रत्येकं शाखायाः शाखान्तरनैरपेक्ष्येण यावदपेक्षितार्थावबोधकत्वात्। अयमभिप्रायः—भारतरामायणादावेकैकं पर्व काण्डं व न कार्त्स्न्येन कथावबोधनाय पर्याप्तम्, किन्तु सर्वोऽपि ग्रन्थः सम्भूय स्वप्रतिपाद्यं कार्त्स्न्येनावगमयंति। वेदस्य तु एकैका शाखा स्वापेक्षितपदार्थबोधनाय पूर्णेति न शाखान्तरापेक्षां दधाति। स्वापेक्षितार्थावबोधकत्वात् एकैका शाखा स्वतन्त्रतया वेद इति याज्ञिकराद्धान्तः।

यदि प्रत्येकं शाखा पूर्णो वेद उच्यते तर्हि वेदस्य चतुष्टयत्वमेवेति कथं नियमः, एकत्रिंशदुत्तरमेकादशशतं याः शाखास्तावन्तो वेदा वक्तव्या इत्याशङ्कायां समाधीयते—

---

[1] नि० १।४।१९

प्रत्येकं शाखायाः पूर्णत्वे वेदत्वेऽपि ऋग्यजुस्सामाथर्वभिश्चतुर्भिः शब्दैः सङ्ग्राह्यस्य विषयचतुष्टयस्यैव स्वीकारात् तत्तद्विषयानुबन्धि-शब्दराशौ तत्तद्वेदस्यैवाभिधेयत्वमनिवार्यम्। एवञ्च—यागापेक्षितशस्त्र-प्रयोज्यशब्दराशेः प्राधान्येन समर्पकोऽकृत्रिमशब्दराशिः ऋग्वेदः। यागीय-स्वरूपविधायकप्रक्रियाबोधको यजुर्वेदः। यागीयसङ्गस्तोत्रक्रियाकलाप-समर्पकोऽकृत्रिमशब्दराशिः सामवेदः। यागकालिकानवहितिमूलकवैगुण्य-समाधायको यागसाधनभूतमानवादिप्राणिजीवनवैगुण्यनिवर्तनायालौकिको-पायबोधकोऽथर्ववेदः। इत्येवं विषयचतुष्टयेन विशिष्टवेदत्वाभ्युपगमे यत्र यत्र तत्तद्विषयसमर्पकत्वं तस्य तस्य शाखाग्रन्थस्य तत्तद्वेदत्वमभ्युपगन्तव्यम्।

वेदेषु मन्त्राः सूक्तान्यनुवाका वर्गा वा विभिन्नानामृषीणामुपलभ्यन्ते। एते ऋषयो न कर्त्तारः। यदि द्रष्टार एव स्युस्तदापि मन्त्राणां शाखासंहितासु क्रमेण सङ्कलनं पुरुषकृतमिति शङ्क्यते चेदत्र शाखानामपौरुषेयत्वविमर्शो याज्ञिकदिशोपपाद्यते। शाखासु मन्त्रक्रमसङ्कलनमपि न पौरुषेयमित्यत्रो-क्तयः—

१—शाकल-बाष्कल-शाङ्खायनशाखाः ग्रन्थारम्भभागे एकरूपा अपि मध्यावसानयोर्भिन्नक्रमाः। क्रमभेदोऽयमपौरुषेयोऽनादिश्चेति याज्ञिकानां विश्वासः।

२—एक एव मन्त्रो विभिन्नास्वेकवेदीयास्वपि शाखासु आनुपूर्व्या पदक्रमेण च भिन्नो दृश्यते[1]। पदानामानुपूर्व्याः अयं भेदोऽपि न मनुष्यकृत इति याज्ञिकाः समामनन्ति।

३—प्रत्येकं शाखायाः अध्यायानुपूर्वी मन्त्रापूर्वी पदानुपूर्वी वा यदि पुरुषकृतानुमीयते चेदेकविंशतिधा बाह्वृच्यमित्यादिरूपेण शाखानामियत्तया परिगणने न कोऽपि मूलाधारः सम्भवेत्, परस्मिन्नपि काले शाखानां निर्मितिसम्भवात्।

४—ऋषयो मन्त्रद्रष्टार इति सिद्धान्तः संसाधितः सद्भिः। एक एव मन्त्रो विभिन्नासु शाखासु एकेनैवानुपूर्वीक्रमेण पठ्यते तदापि सर्वानुक्रमणीषु तस्य भिन्नर्षित्वमुपदिष्टम्। अनेनेदं ज्ञाप्यते

---

१. यथा-एष वोऽमी राजा इति माध्यन्दिनीयके, एष वः कुरवो राजा एष वः पञ्चालो राजा इति काण्वके, एष वो भरतो राजा इति तैत्तिरीयके, एष ते जनते राजा इति च काठके।

यदृषयः स्वमन्त्रदृष्टौ स्वतन्त्रा आसन्, भवतु नाम तन्मन्त्रस्यान्य-दृष्टत्वम्। एवं हि विभिन्नानुपूर्वीकाणां शाखासंहितानां प्रवचने तेऽस्वतन्त्रा एवासन्निति न शाखानाम् ऋषयः कर्त्तारोऽपितु द्रष्टार एव।

५—शाखासंहितानां साम्प्रतिकं स्वरूपमृषिभिः पूर्वमपि ज्ञातमासीदिति नावश्यकम्। मन्त्रद्रष्टृणां पूर्वमपि तत्तच्छाखास्वरूपं वर्त्तमान-वदासीत्। अतएवानुपूर्वीक्रमाद्यवान्तरतत्त्वयुतायाः शाखायाः पूर्णस्वरूपस्य विज्ञातारः ऋषयोऽद्यापि स्वातन्त्र्येण वेदर्षित्वेन स्मर्यन्ते। यथा—शुक्लयजुषो विवस्वाथर्ववेदस्य चाथर्वेत्यादि।

६ - यथा स्वीयवेदस्य समग्रशाखादिवाङ्मयसहितस्य ज्ञातारो वेदर्षय-स्तथैव एकस्याः शाखाया मन्त्रब्राह्मणादिनिरवशिष्टवाङ्मयस्य पूर्णज्ञातारः शाखर्षयः। एते च शाकल-बाष्कल-काण्व-माध्य-न्दिनादयोऽस्माभिः स्वाधिकृतशाखायाः विशिष्टप्रवर्त्तकत्वेन स्मर्यन्ते।

सोऽयं शाखाभेदविमर्शो मीमांसाप्रवर्त्तकेनर्षिणा जैमिनिपादेनापि सम्यगुपपादितः। तन्मतेऽध्ययनसम्प्रदायप्रवर्त्तकत्वेन काठकादिशाखा-समाख्यानां सङ्गतिः। तथा च माधवीयन्यायमालायाम्—

समाख्याध्यापकत्वेन वाक्यत्वं तु पराहतम्।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ इति[1]।

शाखाभेदहेतवोऽपि माधवीयन्यायमालायां विवेचिताः[2],

शाखाभेदात् कर्मभेदो न वा कर्मात्र भिद्यते।
दृष्टं काठकनामादि बहुभेदस्य कारणम्॥

इत्यादिना। ततश्च - ( ) काण्वकाठकादिको नामभेदः शाखान्तरकारणम्। (२) धर्मभेदोऽपि शाखाभेदहेतुः। यथा—कारीरीवाक्यान्यधीयानाः केचिच्छाखिनो भूमौ भोजनमाचरन्ति[3], शाखान्तराध्यायिनश्च नाचरन्तीति धर्मभेदः। (३) पुनरुक्तिश्चापरं शाखाभेदकारणम्। एकस्यां शाखायामधीताः

१. जै० न्या० मा० १।१।८
२. जै० न्या० मा० २।४।२
३. तैत्तिरीयकाण्डानुक्रमणिकायाम् ३।१९

"इषे त्वा" इत्यादयो मन्त्राः पलाशशाखाच्छेदाद्याः क्रियाश्च शाखान्तरेऽप्यधीयन्त इति पुनरुक्तिः। तत्र स्वशाखीयस्यैव मन्त्रादेर्ग्रहणम्। (४) एवमशक्त्यादयोऽपि भेदहेतव उदाहार्याः। न ह्यल्पायुषा मनुष्येण सर्वशाखाध्ययनपूर्वकं कर्मानुष्ठानं कर्तुं शक्यमित्यशक्तिरपि हेतुः। (५) मन्त्राणामभ्यासेनाम्नानमपरं शाखाभेदकारणम्। यथा हविष्कृदेहीति मन्त्रः कस्याञ्चिच्छाखायां मन्त्रकाण्डे त्रिवारमभ्यस्याम्नातः, कस्याञ्चिद् द्विः, कस्याञ्चिच्च सकृदेव (६) अपि च विस्पष्टतायै शाखाभेद आश्रीयते। यथा हविष्कृदाह्वानप्रसङ्गे त्रिर्ह्वयति, त्रिषत्या हि देवाः, इत्येवं त्रिराह्वानं तैत्तिरीयके विस्पष्टं प्रतिपादितम्[1]।

एवं हि शाखाभेदस्य वैशिष्ट्यमुपयोगित्वञ्च किञ्चित्प्रपञ्चितमस्माभिः। अत्र विषयेऽन्यदपि बहु गवेषणीयतामर्हतीति दिक्।

## चरणपदार्थः

कात्यायनकृतस्य परिशिष्टग्रन्थस्य चरणव्यूह इति नामधेयम्। तत्र चरणशब्दस्य कोऽर्थः, कश्च तस्य व्यूह इति ज्ञातव्यमेव भवति। चरणव्यूहं शौनककृतं मन्वानस्तद्व्याख्याकृदाचार्यो महिदासः स्वव्याख्यानारम्भे लिखति[2]—

वेदराशेश्चतुर्विभागाच्चरण उच्यते, तस्य व्यूहः।
चतुर्वेदानां समुदायं व्याख्यास्याम इत्यर्थः।

लेखेनानेन ज्ञायते यद् विभक्ता वेदाश्चत्वारः, अतः प्रत्येकं वेदस्य चरणत्वम्। अत्रास्माकं विमर्शः—

चतुर्थांशवाचकस्य पादशब्दस्य प्रवृत्तिः कथं सञ्जातेत्यत्र यास्काचार्येण कल्पितं यत् पशुश्चतुष्पाद् भवति। तस्य च चतुर्थांशस्य सादृश्येन चतुर्थांशवाचित्वे पादशब्दस्य व्यवहारः प्रथितः[3]। तथैव चरणशब्दोऽपि चतुःसंख्यया विभक्तेषु वेदेषु प्रत्येकं बोधनाय प्रवृत्त इति महिदासोक्तिः सङ्गमनीया। ततश्च स्वकीयाभिर्नानाशाखाभिर्विततः एको वेदश्चरणपदार्थ इति फलति। परमस्त्यत्र विप्रतिपत्तिः।

निरुक्तकृता पदप्रकृतीनि सर्वचरणानां पार्षदानि इति सिद्धान्तः संस्थापितः[4]। अत्र यदि चरणपदस्य वेदैकापरपर्यायत्वं स्यात्तर्हि चतुर्णां

---

१ तै॰ ब्रा॰ ३।२।५ ८        २. च॰ व्यू॰ पृ॰ १-२
३ नि २।७        ४. नि॰ १।१७

वेदानां चत्वारि प्रातिशाख्यानि स्युः, न चैवं दृश्यते। इदङ्काले तु नाम्ना ऋक्-तैत्तिरीय-वाजसनेया-थर्वप्रातिशाख्यान्युपलभ्यन्ते। सामवेदस्य सर्वाङ्गपूर्णमेकं प्रातिशाख्यं नास्ति, अपितु नैके ग्रन्थाः दृश्यन्ते, ते च प्रातिशाख्यान्तर्गतत्वेन विद्वद्भिरङ्गीकृताः। अथर्ववेदस्यैका चतुरध्यायिका पृथगेव वैशिष्ट्यं स्वस्य साधयति। यजुर्वेदः शुक्लकृष्णत्वेन सविशेषं द्विधा विभक्तः। याज्ञिकदृशापि उभयोर्ब्राह्मणानां सूत्राणाञ्च प्रतिपादनशैलीषु परस्परं महद् वैभिन्य वर्त्तते। अतएवैतावेकवेदरूपावपि भिन्नचरणो मन्येते। अतः शुक्लयजुषां वाजसनेयप्रातिशाख्यं, कृष्णयजुर्वेदस्य च तैत्तिरीयप्रातिशाख्यमुपलभ्यते।

उपरितनविश्लेषणेनेदं स्फुटीभवति यच्चरणपदस्यान्यत् किमपि तात्पर्यमप्यस्तीति मन्तव्यमेव। याज्ञिकपीयूषपादास्तु चरणपदार्थमन्यरूपेणैवाभिप्रयन्ति। तथा च तेषां सङ्ग्रहकारिकाः—

वेदस्याध्ययनार्थं यद् व्रतं तच्चरणं भवेत्।
व्रतक्रमविभेदेन चरणानि बहूनि हि॥
शाखाभेदेऽपि यत्रैक्यं व्रतानां दृश्यते विधौ।
ताः सर्वा अपि शाखाः स्युरेकस्मिश्च णे ध्रुवम्॥ इति।

अयं भावः—चरणं नाम व्रतपूर्वकमध्ययनम्। एकविधमध्ययनं यासां शाखानां ताः सर्वा अप्येकचरणा भवन्ति। अध्ययनमिति नाध्ययनधर्मः, किन्तु अध्ययनार्थं व्रतम्। अतएव ब्रह्मचर्यंचरणमित्यत्र चरणमिति व्रतम्, शारीरो मानसो वा परिपालनीयो नियमगणोऽभिधीयते[1]। भिक्षाचर्यंचरण मित्यत्रापि चरणशब्दो व्रतार्थे सङ्गच्छते। भिक्षाचर्ययिा नियम इत्यर्थे प्रयुक्तश्चरणशब्दः। स च—'भवत्पूर्वां ब्राह्मणः, तिस्रोऽप्रत्याख्यायिन्य' इत्यादिर्नियम[2]स्तदेव चरणम्। अतएव काण्वमाध्यन्दिनीयशाखयोरुच्चारणस्वरप्रदर्शनादिवैषम्येऽप शारीरमानसव्रतधर्माणामेकरूपत्वादेकचरणत्वम्। तत एव च प्रातिशाख्यस्य, कातीयश्रौतगृह्यसूत्रयोश्चरणे एकत्वम्। इदमेव मतं निरुक्तव्याख्याता दुर्गाचार्योऽपि—"सर्वेषां चरणानां शाखान्तराणामित्यर्थः[4]" इत्यनेन सङ्केतयति। एवं हि एकविधव्रतेनाध्येतुं शक्यो वेदशाखासमूहश्चरणमिति निर्गलितोऽर्थः।

---

१. तु० एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः।
२. पा० गृ० २।५।१ ३. पा० गृ० २।५।२,५
४. नि० १।१७ व्याख्यायाम्

## वेदस्याभिधानानि

इह खलु पुण्यभूमौ भारते वर्षे आस्तिकजनाः वेदस्य परमं प्रामाण्यमभ्युपगच्छन्ति । वस्तुतो भारतस्यास्तिकत्वं वेदप्रमाणमूलकमेवेति –"नास्तिको वेदनिन्दकः" इति[1] मनुवचनादध्यवसीयते । प्रमाणान्तरेणार्थमुपलभ्यं रचितत्वं पौरुषेयत्वं, तद्विपरीतमपौरुषेयत्वमिति धिया वेदस्यापौरुषेयत्वं समासेन सिद्ध्यति । पुरुषसम्बन्धाभावात् पुरुषसम्बन्धिनां भ्रमप्रमादविप्रलिप्साकरणापाटवादीनां दोषाणां वैदिकशब्दराशावप्रसक्तेः वेदस्य स्वतः प्रमाणत्वं, मूर्द्धन्यत्वञ्च स्पष्टमेव । एवमयं भारतीयैः प्रमाणान्तरनिरपेक्षेण शङ्कापङ्ककलङ्कविरहितेन चेतसा ईश्वररूपेण शिरसा समादृतः सर्वस्य जगतः कल्याणाय सक्षम इति दृढं मन्यते । लौकिकार्थकुशलः कौटिल्यापरनामधेयश्चाणक्यवर्योऽपि लोकचमत्कारकारिणि स्वीयेऽर्थशास्त्रे[2]—

व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥

इति समादिशन् वेदं वैदिकीं मर्यादाञ्च सबहुमानमुररीकरोति ।

सोऽयं वेदः ऋग्वेद-यजुर्वेद-सामवेदा-थर्ववेदरूपेण चतुर्धा व्यवस्थापितो, गद्यं पद्यं गानमिति त्रिविधशब्दप्रकाशनशैल्या त्रयीपदेनापि सुप्रथितो, जटामालादिविकृतिरूपविशेषाभ्यासप्रणालिकया दृढतरमभ्यस्यमानत्वादाम्नाय इति शब्देन सत्कृतो, गुरुमुखोच्चारणानूच्चारणविधया गुरुशिष्यपरम्परयाऽद्ययावदविच्छेदेन प्रतिपालितत्वाच्छ्रुतिरिति समाख्यया ख्यातः, अधिकृतवैदिकविद्वन्मुखेन वैदिकशब्दराशेरागतत्वाद्धेतोरागम इति च सविशेषमनुध्यातः, प्राचीनार्वाचीनैर्मनीषिभिः स्वायत्तविद्यासंस्कारबलेन परिचिताचारव्यवहारसहकृतेन स्वानुभवेन परकीयप्रकाशितविचाररहस्यानुसन्धानमन्तरेणापि बहुभिर्बहुधा व्याख्यायते ।

### ऋग्वेदः

प्राचीनार्वाचीनैः पौरस्त्यपाश्चात्यैर्वेदानुमोदकैरननुमोदकैर्वा सर्वैरपि विश्ववाङ्मये ऋग्वेदस्य प्राचीनतमत्वमभ्यर्हितत्वञ्च संशीतिलेशस्पर्शनमन्तरा स्वीक्रियत एवेति नूनमस्माकं भारतीयानां गौरवाधानहेतुः । को नाम जनो

१. म० स्मृ० २.११
२. कौ० अ०

न मुह्येत वेदस्यास्य मन्त्रमाधुर्येण, न स्निह्येतास्य सूक्तिसौरभे, न वृणीत वर्णनवैभवम्, न भजेत भावगाम्भीर्यम्, न पूजयेदुपदेशपरम्पराम्, न रज्येत ऋचां रणितेन, नोपकुर्याच्च क्रियाकौशलेन स्वात्मानम्। विश्वस्मिन् सभ्यताया उत्सः संस्कृतेश्च स्रोत इदमेव पुस्तकप्रकृष्टम्। शाखानामेकविंशत्या प्रसृतस्य ऋग्वेदस्यैकैव संहिता पूर्णा समुपलभ्यतेऽधुना। सैव शाकल-बाष्कल-शाङ्खायनैस्त्रिभिः शाखिभिः समाद्रियते। बाष्कलशाङ्खायनसंहितयोः कश्चन विशेषः क्रमो वर्तते स एव तच्छाखिभिः स्मर्यते। आश्वलायनशाखा तु सौत्री, तस्याः संहितादिकं न विभिद्यते। आश्वलायनशाखयात्मानं परिचाययन्तो गुर्जरदेशे खेडावालजातौ विशेषत उपलभ्यन्ते। शाङ्खायनशाखा गुर्जरप्रदेश एव विरलप्रचारा। तस्याः ब्राह्मणारण्यकोपनिषदां पाठ-सम्प्रदायोऽपि विभिन्नः। एवं शाकलसंहितायाः समस्ति काचन विशिष्टोच्चा-रणपरम्परा केरलेषु।

ऋग्वेदविषये सार्वदेशिकैर्मनीषिभिः शोधार्थिभिश्च बहुतरां विवेचित-मिति कृतमत्रातिप्रकान्तेन। अस्माभिस्तु ऋग्लक्षणविचारं प्रकृत्य पारम्पर्या-नुगृहीतं बह्वृचानां किमप्यत्र वक्ष्यते।

### ऋग्यजुःसामशब्दार्थविचारः

ऋक्, यजुः, साम एते त्रयः शब्दा बह्वर्थका इत्यस्मदभिप्रेतम्। एतल्लक्षणयुक्तः ऋगादिसंज्ञको मन्त्र एकोऽर्थः, ऋगादिवेद इति द्वितीयः, लक्षणनिरपेक्षमन्त्रात्मकवर्णराशिरूपश्च तृतीयः। ऋग्यजुस्सामेति त्रयः शब्दाः प्रथमे मन्त्ररूपे, द्वितीये वेदरूपे चार्थे प्रायशः प्रयुज्यन्ते। मन्त्ररूपस्य ऋगादिशब्दस्य लक्षणं श्रुत्या प्रतिपदं प्रतिपाद्यते[1]—

> "ऋगगाथा कुम्ब्या तन्मितं, यजुर्निगदो वृथा वाक् तदमितं,
> सामाथो यः कश्च गेष्णः स स्वरः।"

इति। ततश्च, ऋचो मिताक्षरत्वं, यजुषोऽमिताक्षरत्वं, साम्नश्च गानानुबन्धि-स्वरत्वं लक्ष्यते। तथा चास्य वैशद्येन ऋगादिमन्त्रस्य लक्षणं मीमांसादर्शने स्पष्टमुक्तम्। तद्धि माधवः[2]—पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः, गीतिरूपा मन्त्राः सामानि, वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्राश्च

---

१. ऐ० आ० ३।६ ४

२. जै० न्या० मा० वि० २।१ १०

यजूंषि, इति लक्षितवान्। एतदेवर्क्सामयजुषां लक्षणमुद्दिश्य स्वाध्याय-विधौ —

हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति॥
स्वरवर्णान् प्रयुञ्जानो हस्तेनाधीतमाचरन्।
ऋग्यजुस्सामभिः पूतो ब्रह्मलोकमवाप्नुयात्॥

इति माध्यन्दिनीयशिक्षोक्ता[1] ऋग्यजुस्साम्नामुक्तिः सङ्गच्छते।

द्वितीयश्च वेदपरः ऋगादिशब्दः ऋग्वेदादिप्रसिद्धग्रन्थानां नामधेयत्वेन ख्यात एव। तेषु च वैशेष्यात्तद्वादस्तद्वादः, प्राधान्येन व्यपदेशा भवन्ति, इत्यादिन्यायाद् ऋग्भूयिष्ठत्वात् प्रथमो वेदः ऋग्वेदसंज्ञया, यजुषां भूयिष्ठ-त्वाच्च द्वितीयो वेदो यजुर्वेदनाम्ना प्रथितः। वस्तुतः ऋग्वेदेऽपि यजुषां, यजुषि चर्चां सद्भावो भवितुमर्हति[2]। एतदेव तैत्तिरीयसंहिताभाष्योपक्रमणि-कायां सायणेनाभिप्रेतम् —

"तत्र यजुषामध्वर्युवेदेऽतिबहुलत्वात् क्वचिदृचां
सद्भावेऽपि यजुर्वेद इत्येवाख्यायते" इति[3]।

सामवेदस्य संहितारूपेण प्रसिद्धो भागः षड्जादिसप्तस्वराभावाद् गानरूपो नास्ति, वेदान्तरेष्विव तत्रापि त्रैस्वर्यस्याधीयमानत्वात्। तथापि तत्र सामवेदप्रसिद्धौ सायणार्यस्य—"गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते", इत्युक्तिः[4] सम्प्रदायविद्भिः समादरणीया भवति। साम्नामाश्रयभूतत्वादृगात्मकवेदस्य सामनामधेयं स्वीकरणीयम्।

तृतीयस्त्वर्थः ऋगादिशब्दानां तत्तद्वेदपठित-लक्षणनिरपेक्ष-प्रसिद्धय-नुगतमन्त्रात्मकवर्णराशौ व्यवह्रियते। अतएवर्ग्वेदान्तर्गतो यजुर्मन्त्रोऽप्यृक्-शब्देन, यजुर्वेदान्तर्गतः ऋङ्मन्त्रोऽपि यजुश्शब्देन, सामवेदान्तर्गतो गीति-विरहितो मन्त्रश्च सामशब्देन प्रोच्यते। अभिमतस्यास्य पुष्टिर्माधवाचार्यस्य— "अध्यापकप्रसिद्धेर्हि ऋग्वेदादिपठितो मन्त्रः ऋगादिः", इत्युक्त्या[5]

---

१. मा० शि० स्व० ४१, ४५
२. यथा–सामवेदे ……महन्मे वोचः, देवसवितः प्रसुवयज्ञम्, इत्यादयो यजुर्मन्त्राः ( जै० सा० गा० भू० पृ० भ )
३. च० भा० भू० पृ० ७
४. च० भा० भू० पृ० ६७
५. जै० न्या० मा० वि० २।१।१०

सम्भवति। अत एव याज्ञिकपीयूषपादास्तु ऋगादिवेदानां लक्षणमेवमुपदिदिशुः—

यजुर्वेदविहितयागापेक्षितशस्त्र[1]-तदङ्गादियावदपेक्षिताङ्गकलापसमर्थको वेदभाग ऋग्वेदः, द्रव्यदेवतात्यागात्मकयज्ञस्वरूपबोधको वेदभागो यजुर्वेदः, स्तोत्र[2] तदङ्गकलापसमर्थकश्च वेदभागः सामवेद इति।

ऋग्यजुश्चेमौ शब्दौ मन्त्राणां शैलीद्वयस्यावबोधकौ भवतः। जैमिनिपादेन ऋचो लक्षणमेवमुक्तम्—"यत्रार्थवशेन पादव्यवस्था" इति[3]। अस्य भावः– येषु मन्त्रेषु अर्थस्याधारेण पादानां (चरणानां) सम्यग् विभजनमस्ति सा ऋग् ऋचा वा। अत्र सूत्रे वृद्धो यूनेत्यादिवत् सहार्थद्योतिका तृतीया विभक्तिरङ्गीकर्तव्येत्यस्माकमभिप्रायः। ततश्चायमर्थः—ऋक्ष्वर्थप्राधान्यस्य सत्त्वेऽपि छन्दोभिर्नियमितानि, प्रायशोऽक्षरादिसामान्येनैकरूपाणि, चरणान्यावश्यकानि भवन्ति। नैष नियमो यजुर्मन्त्रेषु। यजुषां लक्षणं जैमिनिनाचार्येण "शेषे यजुःशब्दः" इति कृतम्[4]। यजुषि सत्त्वेऽप्यर्थप्राधान्यस्य, छन्दोभिर्नियमितान्यक्षरसामान्यादेकरूपाणि चरणानि नैवावश्यकानि। अपितु तत्र यज्ञप्रयोगानुकूल्येनार्थस्य प्राधान्यम, तदाधारेण च पूर्णस्य यजुर्मन्त्रस्यैव विनिश्चयः। न तेषु पादकल्पनमपितु अवसाननिर्णयः। यथा—इषे त्वोर्ज्जे त्वेत्यादिरूपे यजुषि पञ्च मन्त्राः।

लौकिककवितासु अर्थप्रकाशनेन सह प्रत्येकं पादे विरामो निश्चितस्तथैवर्क्षु छन्दसामाधारेण तदनुकूलाक्षरसङ्ख्यापूर्त्तौ पादविरामो निश्चितः। यथा च लौकिकगद्येष्वभिधेयार्थप्रतिपादनानन्तरमवसानं (Pouse) भवति, न पादकल्पनं, तथैव यजुःष्वपि यज्ञसम्बन्धिविनियोगानुकूलार्थप्रतिपादनानन्तरमवसानं भवति, नावान्तरपादकल्पनम्। एवं ह्येकस्मिन् यजुष्यनेके मन्त्रा अवसानानि चानेकानि भवितुमर्हन्ति। इदमेवाभिप्रेत्य यजूंष्यृचश्चैवं परिभाष्यन्ते[5]–

"अनियताक्षरपादावसानं यजुः, नियताक्षरपादावसाना ऋक्" इति। नैतच्छङ्कनीयं यद् यजूंषि च्छन्दोविरहितानि भवन्ति। वस्तुतः ऋग्यजुषरूपे

---

१. अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम।

२. प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम।

३. जै० २।१।३५ ४. जै० २।१।३७

५. माध्यन्दिनीयसंहिताभाष्योपक्रमे महीधराशयः।

पाठशैलीद्वये उभयत्रापि च्छन्दसामुपदेशः कात्यायनशौनकादिप्राचीनैश्छन्दोविद्भिराचार्यैर्विहितः, येषाञ्च निर्देशः सायणमहीधरादिभिर्व्याख्याकृद्भिस्तत्र तत्र मन्त्रव्याख्यानावसरे कृतः। ऋग्यजुषादिरूपः समस्तो वेदराशिः छन्दोभिराच्छादित एवेति च्छन्दसां 'छन्दस्त्वमुररीकृतमाचार्यैः'[1]। अतएव वेदापरपर्यायत्वेन छन्दश्शब्दप्रसिद्धिः, सा च पाणिन्यादिभिराचार्यैः— बहुलं छन्दसि, विभाषा छन्दसि[2] इत्यादिसूत्रैं स्वीकृता।

यजुषां छन्दोविधानं नोच्चारणलयाभिप्रायेणोपदिष्टमपि त्वध्येतॄणां ज्ञानार्थमेव तद् भवति। उक्तमपि कात्यायनेन—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥ इति।

छन्दसां ज्ञानं निष्फलमेवेति प्रयोजनाभावाद् वैयर्थ्यं न कल्पनीयम्। छन्दसां ज्ञानेन मन्त्रस्य प्रयोक्तुश्च बलाभिवृद्धिः श्रूयते—अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्तरं भवति, इति।

## ऋग्वेदाध्ययने पारम्पर्यागतो विशेषः

भारतीयभाषासु ळकारळ्हकारयोर्ध्वनिः ऋग्वेदीय एव। अन्यवेदेषु ध्वनिद्वयमिदं न प्रायो दृश्यत इति ऋग्वेदाध्ययनस्यास्ति विशेषोऽन्यवेदेभ्यः। तथा च शौनकाचार्येणास्य नियमो व्यवस्थापितः—

'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः' इत्यादिः पार्षदे[3]। अद्यत्वेऽपि महाराष्ट्रराजस्थानादिप्रान्तीयभाषासु एवं ध्वनिः प्रयुज्यते समुच्चार्यते च। अथ च यजुर्वेदे इवग्वेदे नानुस्वारस्य ँकाररूपेणोच्चारणम्।

वैदिकसंहितास्वेकमेव पदं पुनरुक्तं सद् गलत्पदमिति कथ्यते। छन्दोभाषाग्रन्थेष्वेतेषां नियमादयः समुक्ताः[4]। ऋग्वेदीयपारम्पर्यवित्सु तदिदं गणान्तमिति व्यवह्रियते। ऋचः पुनरुक्तो गणान्तेयमृगित्युच्यते। वसन्तपूजनादिषु मन्त्रोच्चारणे क्रमादिपाठेषु गणान्तसम्प्राप्तौ संहितावत्पाठः, अन्ते

---

१. नि० ७ १२
२. पा० २।३।३६, २।४।७३, २।४।७६, १।२।२६
३. ऋ० प्रा० १ ५२
४. द्र० वा० प्रा० ४:१६६-१८०

च पदद्वयस्य पाठः। पदपाठे तु गणान्तपदानामुच्चारणाभावः। संहितायां न गणान्तस्य प्रवृत्तिः। एवमेव समानपादस्य समानार्द्धर्चस्य च समानोदर्कसंज्ञा सम्प्रदायवित्सु। संहितायां समानोदर्कस्य संहितावत्पाठः, पदपाठे चानुच्चारणम्। वसन्तपूजाचर्चयोः क्रमपाठे समानोदर्कप्रसक्तौ संहितावत्पाठस्तदन्त्ययोः पदयोश्च क्रमपाठः क्रियते।

ऋग्वेदिभिः "गर्भे नु सन्ननवेषामवेदमहम्"[1] इत्यस्योपांशुपाठ एव पारायणवसन्तपूजयोर्विधीयत इति वैशिष्ट्यम्। कतिपये ऋग्वेदाध्यायिनः पारायणादिषु लोकप्रथितां सवितृदेवताकां गायत्रीमृचमुपांशु पठन्ति, केचिच्चोच्चैर्ब्रुवते। अत्रास्माकं विमर्शः- ऋग्वेदे सावित्र्याः सव्याहृतिकपाठानुपलम्भा[2]दस्या उच्चैष्ट्वमभिप्रयन्ति केचित्, तत् सर्वथानुचितमिति न वक्तुं शक्यते, सव्याहृतिकस्यैव गायत्रीमन्त्रस्योपांशुप्रयोगे गृह्यकल्पकृतां स्वारस्यात्। यजुर्वेदे तु सव्याहृतिकस्य गायत्रीमन्त्रस्योपलब्धे[3]स्तत्र वैदिकानामुपांशुपाठ आवश्यक एव। परमृग्वेदेऽपि उपांशुपाठ एव सम्प्रदायैकदेशसम्मतः समीचीन इत्यास्माकीनः पक्षः।

## बह्वृचानामाध्वर्यवपरिग्रहे सम्प्रदायः

ऋग्वेदीयकल्पेषु श्रौतप्रयोगोपदेशे प्रायोहौत्रमेव कर्मोपदिष्टम्, नाध्वर्यवं याजमानञ्च। आध्वर्यवं बह्वृचैर्यजुर्वेदोक्तं ग्राह्यं भवति। तत्र यजुषो द्वैविध्ये कतरद् यजुराश्रयणीयमिति विशयः। कृष्णयजुर्वेदोक्तस्यैवाध्वर्यवस्य परिग्रहः ऋग्वेदिभिः क्रियत इति सम्प्रत्युपलब्धः सम्प्रदायः तथा चास्य मूलं निर्णयसिन्धौ[4]—

यजुषां बहुशाखत्वात् सन्देहे समुपस्थिते।
कां शाखामवलम्बेरन् तादृशीं बह्वृचादयः॥
आध्वर्यवं याजमानं ग्राह्यं बौधायनीयकम्।
अन्यथा पतितो ज्ञेय इति बौधायनोऽब्रवीत्॥
आध्वर्यवं याजमानमाग्नीध्रं यच्च नोदितम्।
तत्र बौधायनं ग्राह्यं बह्वृचादिभिरादरात्॥

---

१. ऋ० ४।२७।१ २. ऋ० ३।६२।१०
३. मा० सं० ३६।३
४. नि० सि० टीकायाम ११६८-७२

त्रिकाण्डमण्डनेऽपि—

श्रौतं स्मार्तं च यत्कर्म स्वशाखायां न विद्यते ।
बौधायनोक्तं तद्ग्राह्यं बह्वृचादिभिरादरात् ।।

स्मृतिसङ्ग्रहे च—

वैतानिकाग्निकार्यं यत् स्वशाखायां न विद्यते ।
आपस्तम्बोदितं ग्राह्यं बह्वृचादिभिरादरात् ।।
बह्वृचः सामगश्चापि कुर्यादाध्वर्यवादिकम् ।
आपस्तम्बेन वा प्रोक्तं तथा बौधायनेन वा ।।

यज्ञकाण्डे तु—

बह्वृचः सामगश्चापि स्वसूत्राभावतस्तथा ।
आपस्तम्बेन वा प्रोक्तमिति शातातपोऽब्रवीत् ।।
शाखिनामपि सर्वेषामभावं स्वप्रयोगिणाम् ।
आपस्तम्बोक्तमार्गेण कर्तव्यं पुनरब्रवीत् ।। इति ।

## यजुर्वेदः

निरुक्तकृद् यास्को यजुश्शब्दं यज्धातोर्निष्पादयति[1] । स चायं भावो यज्ञस्वरूपनिर्मापकत्वरूपो "यज्ञस्य मात्रां विमिमीत उ त्वः"[2] इति श्रुत्यापि संवदति । आचार्यसायणोल्लेखेन यजुर्वेदो यज्ञस्याधारो भित्तिरूपः, ऋक्सामादयस्तु तदाश्रिताश्चित्ररूपाः[3] । अतो यज्ञक्रियासु यजुर्वेदस्याध्वर्युवेदापरपर्यायस्यैव प्राधान्यम् । अथवा यजुर्वेदेन यज्ञशरीरं निर्मीयते तत्र ऋग्वेदेन कृतं कर्म कटककुण्डलादिवदाभरणजातम्, तेषु च सामवेदीयगानानि मणिमुक्तादिवच्छोभाधायकानीति सायणार्यस्याभिनव उपमाप्रसङ्गः । एवं याज्ञिकदृष्ट्यास्ति यजुर्वेदस्याभ्यर्हितत्वम् ।

यजुर्वेदे भूयिष्ठा गद्यात्मका अनियतपादा याज्ञिकमन्त्राः । अतः प्राचीनाचार्या यजुर्वेदलक्षणमेवमामनन्ति—वृत्तगातिवर्जितत्वेन प्रश्लिष्टपठितमन्त्रा यजूंषि, शेषे यजुश्शब्दः, इत्यादि । तदेष यजुश्शब्दोऽस्माभिः पुरस्ताद् विवेचितः । ऐतिहासिकदृष्ट्यापि भारतीये धार्मिके इतिहासे यजुर्वेदस्याविर्भावेण नूतनयुगस्यारम्भणं विचारकाः स्वीकुर्वन्ति । उभयथैव यजुर्वेदस्य

---

१. नि० ७।१२ २. ऋ. १०।७१।११
३. ऋ० भा० भू० पृ० ७

वैशिष्ट्यं भवति। यजुर्वेदस्यास्ति सम्प्रदायद्वैविध्यं ब्रह्मादित्यभेदेन[1]। तत्र ब्रह्मपरम्पराधिगतः कृष्णयजुर्वेद उच्यते, आदित्यपरम्पराप्राप्तश्च शुक्लयजुर्वेदः।

## शुक्लयजुर्वेदः

जगतीतले शुक्लयजुर्वेद आदित्यपरम्परया प्रसृत इति "आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते" इति शतपथश्रुत्या[2] सूर्याद् याज्ञवल्क्यर्षेः शुक्लयजुषामध्ययनं ज्ञायते। याज्ञवल्क्यवर्योऽपि सूर्यात्प्राप्तं शुक्लयजुर्वेदं पञ्चदशशिष्येभ्यः समध्यापयत्। ते च पञ्चदश शिष्याः स्वस्वपठितं शाखात्मकं वेदभागं स्वशिष्येभ्यः प्रोचुः। शाखापाठस्याद्यप्रवचनकृतः पञ्चदश याज्ञवल्क्यशिष्या आसन्नतस्तेषामेव नामधेयेन ताश्शाखाः सङ्केतिताः। ता एव पञ्चदशशाखाः शुक्लयजुषां चरणव्यूहेऽन्यत्र चोक्ताः। सायणार्येण काण्वसंहिताभाष्योपक्रमणिकायामेतासां नामान्येवमुपदिष्टानि[3]—

काण्वाः, माध्यन्दिनाः, शापेयाः, तापायनीयाः, कापालाः,
पौण्ड्रवत्साः, आवटिकाः, परमावटिकाः, पाराशर्याः,
वैधेयाः, वैनेयाः, औधेयाः, गालवाः, बैजवाः, कात्यायनीयाश्च।

वायुपुराणे तु नामनिर्देश एवंविधः[4]—

याज्ञवल्क्यस्य शिष्यास्ते कण्व-वैधेय-शालिनः।
मध्यन्दिनश्च शापेयी विदग्धश्चाप्य उद्दलः॥
ताम्रायणश्च वात्स्यश्च तथा गालवशैषिरी।
आटवी च तथा पर्णी वीरणी सपरायणः।
इत्येते वाजिनः प्रोक्ता दश पञ्च च संस्मृताः॥

---

१. ..........वेदस्य सम्प्रदायो द्विधामतः।
ब्रह्मणः सम्प्रदायस्तु आदित्यस्य तथा मतः।
अयातयामसंज्ञोऽयं कृत्स्नकर्मप्रकाशकः।
(जाबालिसं० अ० १)

२. श० ब्रा० १४।९।४।३३

३. च० भा० भू० पृ० १०४

४. वा० पु० अ० ६१

अत्र नामसु वैभिन्न्यं दरीदृश्यते। याज्ञिकपीयूषपादास्तु शाखानां पञ्चदशत्वमेवमभिप्रयन्ति—

काण्वा माध्यन्दिनाश्चैव शाफेयास्तापनीयकाः।
कापालाः पौण्ड्रवत्साश्चावटिकाः परमावटाः॥
पाराशर्यश्च वैधेया वैनेयौधेयगालवाः।
बैजवाश्चैव कात्यायनीयाः स्यु शुक्लयाजुषाः॥
दश पञ्च च शाखास्तु शुक्लस्य यजुषः स्मृताः।
तासु माध्यन्दिनी शाखा सुख्यातोत्तरभारते।।
काण्वी शाखा महाराष्ट्रे मद्रप्रान्ते च कुत्रचित्।
बाङ्गकालिङ्गविप्रेषु केषुचिद् वर्ततेऽधुना॥ इति।

## वाजसनेयशब्दविचारः

शुक्लयजुर्वेदस्य पञ्चदशशाखानामध्येतारः सर्वेऽपि वाजसनेयिन इत्युच्यन्ते। वाजसनेयो वेदोऽस्ति येषां ते वाजसनेयिन इति व्युत्पत्तिं बुधा निर्दिशन्ति। तत् सन्दिह्यते वाजसनेयशब्दस्य किं प्रवृत्तिनिमित्तमिति। अत्रास्माभिर्विविधव्युत्पत्त्यादिभिर्वाजसनेयशब्दो विव्रियते।

१—काण्वसंहिताभाष्योपक्रमणिकायां[1] सायणार्यो वाजसनेयपदमेवं व्याचष्टे—वाज इत्यन्नस्य नामधेयम्, "अन्नं वै वाज" इति श्रुतेः। वाजस्य सनिर्दानं यस्य महर्षेरस्ति सोऽयं वाजसनिस्तस्य पुत्रो वाजसनेयः। तस्य याज्ञवल्क्य इति नामधेयम्।— एतस्माद् व्याख्यानाद् वाजसनेयो याज्ञवल्क्य इति स्पष्टं भवति, याज्ञवल्क्यस्य पितान्नदानशील आसीदिति च।

२—श्रीमद्भागवते द्वादशस्कन्धस्य षष्ठाध्याये[2]—

एवं स्तुतः स भगवान् वाजिरूपधरो हरिः।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः॥
यजुर्भिरकरोच्छाखा दश पञ्च च तद्विभुः।
जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः॥

इति सूतोक्त्या वाजसनेयशब्दोऽन्यथैव व्याख्यायते। तथा च श्रीधरस्वामिनः—रविणाश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा सन्यस्ताः त्यक्ताः शाखा वाजसनिसंज्ञा, इत्याहुः। अस्य तात्पर्यमस्माभिरेवं गृह्यते—अश्वरूपधारिणः सूर्यस्य वाजेभ्यः ग्रीवोपरितनकेशेभ्यः केसरापरपर्यायेभ्यः

---

1. च० भा० भू० पृ० १०४ 2. भा० १२ ६।७३-७४

सम्यग् याज्ञवल्क्ये स्थापिताः शाखा वाजसन्यः। वाजसनिभ्यो हितः प्रवचन-शिष्यपरम्परादिभिः प्रसादयिता वाजसनेयो याज्ञवल्क्यः।

३—अथवा सूर्येण याज्ञवल्क्यस्य तपसातितरां प्रसन्नेन स्वप्रतिष्ठिता। शाखाः वेदाध्यापनोपयोगिव्रतकालविरहेणैव वाजेन वेगेन झटिति याज्ञवल्क्यायोपदेशमुखेन त्यक्ता इति ताः सर्वा वाजसनिसंज्ञाः। तेभ्यो हितो वाजसनेयो याज्ञवल्क्य इत्येवं पुराणोक्त्या द्विधा प्रवृत्तिनिमित्तमित्यस्माकं प्रतीतिः।

४—यद्यपि श्रीधरस्वामिपादैर्वाजसन्यस्ताः इत्येकं पदं मत्वा व्याख्यानमारचितम्, परं सूक्ष्मेक्षिकया वाजसन्यः ताः इति पदद्वयं युक्तं भाति। ततश्च वाजशब्दः परोक्षवृत्त्या वाज्यर्थनिर्देशकः। सनिशब्दश्च 'षणु दाने' इति धातोर्युज्यते। एवञ्च वाजेनाश्वरूपधरेणादित्येन सनिर्दानं यस्य तच्छुक्लयजुर्जातं वाजसनिसंज्ञम्। अर्थोऽयं—

एवं स्तुतः स भगवान् वाजिरूपधरो हरिः।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः॥

अत्र प्रयुक्ताभ्यां वाजी (रूपधरः) अदात् इति पदाभ्यां संवदति।

५—याज्ञिकप्रक्रिययान्यदपि कारणमन्वर्थताया अत्रानुमीयते। वाज इति श्येनपक्षिणो नाम, तस्य वेगातिशयात्। तदाकारा श्येनचितिस्तैत्तिरीयके उपदिष्टा। कृष्णयजुषि श्येनचितिः सशिरस्का। वाजसनेयिनां तु सैव शिरोऽवयवविरहिता सुपर्णचितिरिति विहिता। शिरोऽवयवरहितत्वान्नैषा श्येनरूपा कथयितुं शक्यते, अपितु पक्षपुच्छात्मभिः समानरूपा कल्प्यते। तमिमं याज्ञिकं भेदमनुलक्ष्य वाजपक्षिणः (स) समानं नेया परिकल्पनीया सुपर्णचितिर्यत्रोपदिष्टा स वेदभागो वाजसनेय इत्येव व्युत्पत्ति सम्भवति। लक्ष्यांशस्य धर्मसादृश्येनापि समानता भवतीति सुपर्णचितिर्वाजसनेया।

६—शब्दकल्पद्रुमाख्येऽभिधानकोषे वाजसनिरिति सूर्यस्य नामेत्यभिहितम्। सूर्यस्य च्छात्रो वाजसनेयो याज्ञवल्क्य इत्यपरो नामहेतुः। अत्र वाजसनिशब्दाड्ढक्। भागवतव्याख्याकारो विजयध्वजोऽपि वाजसनः सूर्य इत्यभिप्रैति। तेन प्राप्ता शाखा वाजसन्य इत्यर्थसमन्वयः।

याज्ञवल्क्यप्राप्तं शुक्ल यजुः पञ्चदशशाखात्मकं काण्वमाध्यन्दिनादयः पञ्चदश महर्षयो जगृहुः ताः शाखा वाजसन्य उच्यन्ते। वाजसनिं शुक्लं यजुर्वेदं योऽधीतेऽसौ वाजसनेयो याज्ञवल्क्यः। एतेनेदमपि स्फुटीभवति यद्

वाजसनिशब्दः शुक्लयजुर्वेदवाचकः, वाजसनेयशब्दश्च याज्ञवल्क्यं निर्दिशति। याज्ञवल्क्यप्रोक्ताः शाखा वाजसन्यो वाजसनेया वा। वाजसनेयो याज्ञवल्क्यः परमो गुरुर्येषां ते च वाजसनेयिनः, इति निष्कर्षः।

## माध्यन्दिनीयशाखा

वाजसनेयशाखासु सम्प्रति शाखाद्वयमेवोपलभ्यते। तत्रैका माध्यन्दिनीया, अपरा च काण्वसंज्ञिका। स्वशाखापक्षपातित्वं स्वाभाविकमेव। अतो माध्यन्दिनीया शाखा प्रथमं परिचाय्यते।

याज्ञवल्क्यान्मध्यन्दिनमहर्षिणा प्राप्तस्तेन चोपदिष्टो वेदभागो माध्यन्दिनीयशाखारूपः। माध्यन्दिनीयसंहितायां चत्वारिंशदध्यायाः। अध्यायस्यान्तरविभजनं द्विविधम्—अनुवाकमन्त्रोभयात्मकमेकं मन्त्रात्मकञ्चापरम्। अनुवाकानां तदन्तर्गतानां मन्त्राणां चोपदेशात्मको विभागक्रमः प्राचीनतरः, अनुवाकसूत्राध्यायस्यानुवाकपरिशिष्टस्य चोपलब्धेः। गृह्यश्रौतसूत्रेष्वपि बहुत्रानुवाकानामेव निर्देशः[1]। अध्यायान्तर्गतानां मन्त्राणां गणनाक्रमोऽपि प्राचीन एव। यतो ह्यनुवाकपरिशिष्टादिष्वनुवाकांस्तदन्तर्गतमन्त्रांश्च परिगणय्यान्तेऽध्यायस्य पूर्णा मन्त्रसङ्ख्यापि निर्दिष्टा।

अद्यत्वे माध्यन्दिनीया चैषा शाखा निखिले भारतवर्षे वाङ्मयवैपुल्येन कर्मकलापपरिगृहीततया च दृष्टप्रचारा वर्तते। विस्मृतपरम्पराणां द्विजन्मनां तुरीयवर्णजानाञ्चेयमेव शाखा कलौ धर्मशास्त्रकृद्भिरुपदिष्टेति महदस्या वैशिष्ट्यम् तथा हि—

> चैषां माध्यन्दिनी शाखा ये द्विजा अग्निवर्जिताः।
> नित्यकर्म ततः कुर्यात् तर्पणं देवतार्चनम्॥[2]

इत्यादिषु वचनेषु स्पष्टमेव।

## माध्यन्दिनीयसंहिताविषयाः

अथ कलौ सुतरां प्रचारिताया माध्यन्दिनसंहिताया विषयवस्तु प्रसङ्गादुपन्यस्यते। वाजसनेयिसंहितेत्यपरनामधेयेनापि प्रथितायामस्यां चत्वारिंशदध्यायेषु वैदिककर्मकाण्डस्यैव मुख्यतः प्रतिपादनमस्ति। आद्ययोरध्याययोर्दर्शपौर्णमासेष्टिसम्बद्धा मन्त्राः। तृतीयेऽग्निहोत्रचातुर्मास्य-

---

१. यथा पा० गृ० १।१६।८,९; ३'८।११

२. ब्रह्मप्रोक्तयाज्ञवल्क्यसंहितावचनम् २३३१ स्मृतिसन्दर्भे

यागीयमन्त्राणां सङ्कलनम्। चतुर्थमारभ्याष्टमाध्यायपर्यन्तं सोमसंस्थानां वर्णनं, तत्रापि समेषां सोमयागानां प्रकृतित्वादग्निष्टोमस्यैव विस्तृतं विवरणमस्ति। नवमदशमाध्याययोः वाजपेयराजसूययागावेकाहसोमयागान्तर्गतौ द्वावपि क्रमशः प्रतिपाद्यविषयौ स्तः। एकादशादष्टादशपर्यन्तमष्टस्वध्यायेऽग्निचयनं विवेचितम्। अग्निचयने यज्ञीयाग्न्याधारत्वेनेष्टकाभिः श्येनाद्याकृतिविशेषद्वारा वेदिश्चीयते। एतदन्तर्गत एव षोडशाध्याये शतरुद्रियहोममन्त्रास्तेषु च नानाविधेषु सृष्टिपदार्थेषु रूपकेण रुद्रः संस्तुतः। अष्टादशे वसोर्धारामन्त्राः सोमप्रसङ्गप्राप्ताः।

एकोनविंशमारभ्याध्यायत्रये सौत्रामण्याख्यो यागविशेषः प्रतिपादितः। सोमपानातिशयेन रुग्णस्येन्द्रस्य चिकित्सा सौत्रामणीरूपेण यागेनाश्विभ्यां कृतेत्यस्यास्ति वैशिष्ट्यम्। द्वाविंशाध्यायप्रभृति पञ्चविंशं यावत् सार्वभौमक्षत्रियराजैकमात्रकर्तव्यस्याश्वमेधस्य वर्णनम्। ततोऽध्यायचतुष्टये एकोनविंशपर्यन्तं खिलमन्त्राणां सङ्ग्रहः। त्रिंशत्तमेऽध्याये चतुरशीत्यधिकैकशत-(१८४)-पदार्थालम्भनात्मकस्य पुरुषमेधस्य विधानम्। इदमालम्भनं प्रायः स्पर्शमात्रपूर्वकदेवतोद्देशेनोत्सर्जनमेव, न प्राणोत्क्रामणरूपम्। एकत्रिंशत्तमः पौरुषाध्यायः सुप्रसिद्धः। द्वात्रिंशत्रयस्त्रिंशाध्याययोः सर्वमेधोपदेशः। हिरण्यगर्भसूक्तमप्येतदन्तर्भुक्तमेव। चतुस्त्रिंशाध्यायस्यारम्भे शिवसङ्कल्पोपनिषदुक्ता। अस्यां मनसो माहात्म्यमुपदिश्य तस्य शिवसङ्कल्पत्वं प्रार्थितम्। तदिदं वर्णनमतितरां हृदयावर्जकमुदात्तञ्च। पञ्चत्रिंशत्तमे पितृमेधविषयः। षट्त्रिंशमारभ्याध्यायचतुष्टये प्रवर्ग्यवर्णनम्। चरमे चत्वारिंशेऽध्याये ईशावास्योपनिषदुपदिष्टा। ईशावास्यमिदं सर्वमितिमन्त्रेणारब्धेयमेवोपनिषत् संहितान्तर्गतेति सर्वास्वप्युपनिषत्सु प्राचीनतमत्वेनाभ्यर्हिता पूर्वाचार्यैः।

## काण्वशाखा

कण्वाभिधेनाचार्येणाधीतोऽध्यापितः प्रचारितो वेदशब्दराशिः काण्वशाखारूपेण ख्यातः। ऋग्वेदे कण्वेनर्षिणा तत्पारिवारिकैश्चर्षिभिर्दृष्टा मन्त्राः सङ्कलनया चतुश्चत्वारिंशदधिकत्रयोदशशत — (१३.४)संख्याकाः समुपलभ्यन्ते। तेषु केवलं द्विषष्टिर्मन्त्राः (६२) एव माध्यन्दिनीयसंहितायां, षट्पञ्चाशदेव (५६) च मन्त्राः काण्वसंहितायां क्रमानरूपेण प्राप्यन्ते। तदेतदवधार्य विदुषा सातवलेकरमहोदयेन स्वनिश्चयो द्योतितो

यदृग्वेदीयकण्वकाण्वानाधृत्य काण्वशाखायाः प्रसिद्धिरिति केषाञ्चन मतं नोचितम्[1]।

सातवलेकरमहाशयेनेदमपि विचारितं यत् काण्वसंहितायाम्—"एष वः कुरवो राजा, एष वः पाञ्चालो राजा" एवंविधपाठस्योपलब्धेः काण्वशाखाप्रवर्त्तकस्य महर्षेः कण्वस्य कुरुपाञ्चालदेशसाम्राज्येन सम्बन्धः सिद्धयतीति। परन्तु नैतदवधारयितुं युज्यते। यतो हि प्राचां मते ऋषयो मन्त्रान् साक्षात्कुर्वन्ति। साक्षात्कारः स्वयम्भुवोऽकृत्रिमस्य मन्त्रब्रह्मणो दर्शनमेव। यदि मन्त्रे ऋषिः स्वसम्बद्धं किमपि संयोजयति चेन्मन्त्रस्य स्वयम्भुत्वमेव व्याहन्येत। अतः—एष वः कुरवो राजा एष वः पाञ्चालो (पञ्चालो)राजा[3]—अस्य मन्त्रभागस्य कश्चन विशिष्टोऽभिप्रायो वक्तव्यः। अत्र हेत्वन्तरमपि भवति, मन्त्रार्थदृष्टया 'वः' इति बहूक्त्या कुरव इति बहुवचनं नु सङ्गच्छते, परं पाञ्चाल इत्येकवचनं न सङ्गमयितुं शक्यते। यदि वा पाञ्चालपदमेष इतिपदेन सम्बद्धयते चेदर्थनिष्पत्तिरेवं भवति, हे कुरुदेश-निवासिनः, अयं पाञ्चालदेशाभिजनो युष्माकं राजा वर्तते इति। एवं कथने कुरुदेशवासिनां कृते आक्षेपः मर्मव्यङ्ग्योक्तिश्च भवति। न चैतदुचितम्। अतः स्वीकरणीयं यदत्र कुरुपाञ्चालशब्दयोः प्रसिद्धयनुगतोऽर्थो नास्त्यपि तु कश्चन विशिष्ट एवार्थः।

अत्रार्थमीमांसायां याज्ञिकपीयूषपादानां मतमस्ति यत् कुरवो नाम राष्ट्रविरुद्धभावनां निकृन्तन्ती तत्कदर्थनञ्च कुर्वती जनता। भावोऽयं निरुक्तोक्तेन[4] कुरुः कृन्ततेः इतिनिर्वचनेनापि संवदति। एष वः पाञ्चालो राजा इत्यस्याभिप्रायोऽस्ति प्रजाः, अयं हि युष्माकं कर्मज्ञानोभयकाण्डस्य शास्त्रस्य विज्ञोऽनुगामी च राजा वर्तते इति। कर्मज्ञानोभयकाण्डप्रतिपादकस्य शास्त्रस्य बोधको पाञ्चालशब्दः साम्प्रदायिकः पारिभाषिकश्च। तथा च स्पष्टं श्रीमद्भागवते[5]—

प्रवृत्तञ्च निवृत्तञ्च शास्त्रं पाञ्चालसंज्ञितम्। इति।

---

१. का० सं० भू० पृ० ३

२. का० सं० भू० पृ० १३

३. अयं पाठः सातवलेकरसम्मतो विद्याधरगौडपादसम्मतश्च द्र० श० ब्रा० भू० पृ० २

४. नि० ६।२२

५. भा० ४।२९ १३

एवंविधायामर्थसङ्गतौ न विरोधो न वा व्याकरणातिक्रमः। प्रकरणानुगृहीतभावस्य चैवमुपयुक्ता सङ्गतिः। अतः कुरुपाञ्चालदेशसम्बद्धः कण्वर्षिस्तत्सम्बद्धा च काण्वशाखेति वक्तुं नैव युक्तम्।

अनेनैव स्थाननिर्देशनेनोपाध्यायपादाः[1] पुराकाले काण्वशाखायाः भारतस्योदग्भागे प्रसारं साधयन्ति। न चैवमपि युज्यते। वस्तुतस्तु काण्वशाखा माध्यन्दिनीयशाखातो भिन्ना उत्तरभारतस्योत्कलबङ्गादिप्रदेशेषु दृष्टप्रचारा वर्ततेऽद्यत्वेऽपि। भारतस्य दक्षिणभूभागेऽपि मद्रान्ध्रमहाराष्ट्रप्रदेशेषु काण्वशाखानुयायिनः समुपलभ्यन्ते। महर्षेर्याज्ञवल्क्यस्य प्रधानः प्रथमश्च शिष्यः कण्व आसीदिति काण्वशाखिभिरियं प्रथमशाखात्वेनाप्यभिधीयते। काण्वशाखीयानां संहितामन्त्रब्राह्मणानां मानं माध्यन्दिनीयापेक्षयाधिकम्। संहितायामेकादशोत्तरमेकशतं मन्त्रा माध्यन्दिनीयसंहितातोऽधिका, ब्राह्मणे चाध्यायचतुष्टयमधिकम्। काण्वशाखीयैः कतिपयाचार्यैः स्वशाखीयसंहिता-ब्राह्मणश्रौतगृह्यसूत्रप्रतिशाख्येषु भाष्याण्यारचितानि, परमेतानि माध्यन्दिनी-यापेक्षया न्यूनान्येव। काण्वशाखीयपद्धतिग्रन्था अप्यल्पा एवोपलभ्यन्ते।

काण्वसंहितायां माध्यन्दिनीयसंहितायामिव चत्वारिंशदध्यायाः। काण्वसंहिताया मन्त्रसंख्या षडशीत्युत्तरद्विसहस्रमिता वर्तते। उभयसंहितयो-र्बहुत्र पाठसाम्यमथापि काण्वसंहितोक्ताः कतिपये मन्त्रा माध्यन्दिनीयकेऽदृष्टा विशिष्टा एव। कण्डिकासु मन्त्राणां विभजनमपि यत्रकुत्रचिद् भिन्नम्। यथा---वाजाय स्वाहा, आयुर्यज्ञेन, इति मन्त्रद्वयं माध्यन्दिनीयके कण्डिकाद्व-येनोक्तं काण्वसंहितायां कण्डिकाचतुष्टये विभक्तम्[2]। अयम्पुरो हरिकेशः, इति पञ्च मन्त्राः दशसु कण्डिकासु विभजिताः। कतिपये मन्त्रा द्वयोः संहितयो-रेकाधिकयाऽऽवृत्या समानरूपेण दृश्यन्ते, कतिपये च मन्त्राः काण्वसंहिताया-मधिकमप्यावर्तिताः। यथा अग्न आयूंषि मन्त्रो माध्यन्दिनीयके वारद्वयं पठितः काण्वसंहितायां वारचतुष्टयं पठित उपलभ्यते[3]। एवमेव उरुविष्णु विक्रमस्व, चित्रं देवानाम्, इत्यादयो मन्त्रा माध्यन्दिनीयके द्विरावृत्ताः काण्वसहितायां वारत्रयमावर्तिता दृश्यन्ते।

कण्डिकानां सङ्क्षेपणमपि काण्वसंहितायां दृश्यते। नमोऽस्तु रुद्रेभ्यः

---

१. वैं० सा० सं० पृ० १४५

२. मा० सं० १८।३०-३१ का० सं० १९।४०-४३

३. मा. सं० १९।३८, ३५।१६ का० सं० ८।१६, २१।.०, २९ ३७, ३५।४८

इत्यादयो मन्त्राः माध्यन्दिनीयसंहितायां तिसृषु कण्डिकासु पठिताः, काण्वसंहितायां तु मन्त्रत्रयं संयोज्यैकस्यामेव कण्डिकायां पठितम्[1]। सेयं कण्डिका काण्वसंहितायां बृहत्तमा यजुःस्वरूपा द्वादशावसानेति काण्वसंहिताया वैशिष्ट्यमेवैतत्। न चास्या विशिष्टायाः काण्वकण्डिकायाः कृते वैदिकच्छन्दःशास्त्रेऽक्षरसङ्ख्यया कस्यापि च्छन्दस उपदेशः। काण्वसंहिताया एकादशाध्यायस्य सप्तमी कण्डिकापि कण्डिकाद्वयस्य सङ्कलनरूपा पञ्चदशावसाना विशिष्टा एव।

साम्प्रदायिकाः काण्वाध्येतारः स्वसंहितायाः दशकचतुष्टये विभजनमभिप्रयन्ति। प्रत्येकं दशके दश अध्याया इति नातितिरोहितम्। माध्यन्दिनीयसंहितावदस्यामप्यध्यायान्तर्गता अनुवाकास्तदन्तर्गता मन्त्राश्चेति सङ्केतक्रमः। केवलमन्त्रात्मकोऽप्यध्यायक्रमः प्रचलितो वर्तते। अस्याः शाखाया अनुवाकाध्यायः पृथगुपलब्धस्तत्र चानुवाकादीनां संख्या माध्यन्दिनीय शाखातो भिद्यत इति संक्षेपः।

## शतपथब्राह्मणम्

शुक्लयजुषां ब्राह्मणग्रन्थः शतपथाभिधानेन प्रथितो वितानेन विषयवैशिष्ट्येन च सर्वाणि ब्राह्मणान्यतिशेते। अत्र चतुर्दश काण्डानि शतञ्चाध्यायाः। तथा च याज्ञिकपीयूषोक्ताः सङ्ग्रहकारिकाः—

> तत्रोभयोः शाखयोस्तु ब्राह्मणं यत् प्रसिद्ध्यति।
> नाम्ना शतपथं, तस्य निरुक्तिस्त्वेवमर्थिका॥
>
> पन्था अध्यायरूपोऽत्र शतं तेषां तु संख्यया।
> युक्तं माध्यन्दिनीये तु प्रायिकं काण्वशाखिनाम्॥
>
> हविर्यज्ञश्चैकपादिकोऽध्वरश्च ग्रहः सवः।
> उखासम्भरणं हस्तिघटं चैव ततश्चितिः॥
>
> सञ्चित्यग्निरहस्याष्टाध्यायिनो मध्यमं ततः।
> अश्वमेधश्चोपनिषत् काण्डानि ब्राह्मणे विदुः॥

शतं पन्थानो यस्य तच्छतपथम्। पथिशब्दोऽत्राध्यायवाचकः। अत्र ब्राह्मणे शतमध्यायाः सन्तीति शतपथमितिशब्दो विशेषेणाभिव्यनक्ति। काण्वशाखीयशतपथस्य पञ्चोत्तरशताध्यायपरिमितत्वात्तत्र विशेषणमिदं

---

[1] मा० सं० १६।६१-६३ का० सं० १७।६४

न पूर्णतया संवदति, अपितु प्रायिकत्वेन। माध्यन्दिनीयकाण्वशतपथग्रन्थयो-रानुपूर्व्यामध्यायक्रमे च भेदो दृश्यते।

चरणव्यूहे—

त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह।
यजुर्वेदः स विज्ञेयः ... ... ॥

इत्येवं यजुर्वेदस्य विशेष उपदिष्टः। यजुर्वेदैकदेशरूपे शतपथब्राह्मणेऽपि लक्षणेनानेन सङ्गन्तव्यमित्यत्रास्माकं विमर्शः—

त्रिगुणं नामैकस्य विधेयस्य त्रिरावर्तनम्, तच्च न पुनरुक्तविधया, अपितु विधिरूपं प्रथमम्, उपपत्तिप्रस्तावरूपं द्वितीयम्, निर्णयस्वरूपञ्च तृतीयम्। तद्यथा —[1]

१—अप उपस्पृशति — इत्येवं विधिरूपमुच्चारणम्।
२—तद् यदप उपस्पृशति — एवंविध उपपत्ति-(कारण)-प्रस्तावः।
३—तस्माद्वा अप उपस्पृशति – इति निर्णयस्वरूपं फलरूपं वावर्तनम्।

एवं हि शतपथब्राह्मणस्य विषयोपस्थापन-प्रतिपादनो-पसंहरणरूप-शैलीवैशिष्ट्येन त्रिगुणपाठस्तत्रापि चरणव्यूहोक्त्या संवदति।

## कृष्णयजुर्वेदः

सोऽयमुच्चारणेनानितरसाधारणो नितरामाकर्षकः, सर्वाधिकोपलब्ध-वाङ्मयवैपुल्येन परिपुष्टः, छन्दोगबह्वृचादिभिराध्वर्यवत्वेन परिगृहीतत्वात् सभाजितो, नैकविधैहिकामुष्मिकफलाधायकप्रयोगाणां प्रतिपदमुक्तत्वाज्जनानां सामयिककामनासम्पूरकः, सायणादिपूर्वाचार्यैरभ्यर्हितो ब्रह्मपरम्पराप्राप्तो महनीयः कृष्णयजुर्वेदो नाम। अस्य षडशीत्यां शाखासु साम्प्रतं संहिताविषया तैत्तिरीय-मैत्रायणीय-कठ-कपिष्ठलाभिधेयाश्चतस्रः शाखाः प्राप्यन्त इत्येवं यथायथमालोचितं पुरस्तादस्माभिः। परं कृष्णयजुर्वेदीयकल्पग्रन्थानां नवानामुपलभ्यमानत्वात् सौत्र्यः नव शाखाः सम्प्रति सन्तीत्यपि वक्तुमर्हामः।

किन्तु तैत्तिरीयशाखामन्तरा कस्या अपि सांहितिक्याः शाखायाः कृतपरिश्रमाः पारम्पर्यानुगृहीताश्चाध्येतारो नोपलभ्यन्ते। तैत्तिरीयशाखायाः सम्प्रति वाराणसेयी महाराष्ट्रीया च स्वाध्यायशैली एका, द्राविडसमाश्रिता

---

१. श० ब्रा० १।१।१।१

पद्धतिश्चान्या उच्चारणे दृश्यते। तत्रोभयोः पद्धत्योर्नास्ति पाठभेदः किन्तु स्वाभाविकतया व्यवहारसमाश्रितो गति-सानुनासिकत्वादिकृत एवास्ति कश्चन विशेषः।

## कृष्णयजुर्वेदनिबन्धनशैली

कृष्णयजुर्वेदीयायां तैत्तिरीयसंहितायां, ब्राह्मणे, आरण्यके च केचित् समग्राः प्रश्नाः केवलं यजुर्मन्त्रात्मकाः, केचन प्रश्नाश्च ऋङ्मात्रमन्त्रात्मकाः अश्मन्नूर्जं पवसे शिश्रियाणमित्यादयः[1]। केचित् प्रश्नाः समग्रा एव ब्राह्मणरूपाः। यथा प्राचीनवंशं करोतीत्यादि षष्ठं काण्डं षट्प्रपाठकात्मकं सम्पूर्णमेव ब्राह्मणरूपम्।

अथ चैकस्मिन्नेव प्रश्ने केचिदनुवाकाः ऋङ्मन्त्रात्मकाः, यथा विष्णोः क्रमोऽसीत्यादयः,[2] केचिच्च ब्राह्मणात्मकाः, यथा विश्वरूपो वै त्वाष्ट्र इति षडनुवाकाः[3]। केचिद् युञ्जानः प्रथमं मन[4] इत्यादयः ऋग्यजुषरूपोभयमन्त्रात्मकाः, केचिद् वा प्रजापतिरकामयत[5] इत्यादयो यजुर्मन्त्रब्राह्मणोभयात्मकाः। केचित्तु ऋग्यजुर्मन्त्र-ब्राह्मणरूपास्त्र्यात्मकाः। यथा तृतीयकाण्डस्य प्रथमप्रपाठकान्तर्गते प्रथमेऽनुवाके यो वै देवान् देवयशसेनार्पयतीत्यादि-ब्राह्मणरूपेणारब्धे, अग्निः प्रातः सवने पात्वस्मानिति त्रयो मन्त्राः ऋग्रूपाः, अध्वरो यज्ञोऽयमस्तु, एष ते रुद्रभाग इत्यादि भागद्वयश्च यजुः।

नैतदत्र तर्क्यं यत् तैत्तिरीयसंहितोक्तमन्त्राणां समेषां ब्राह्मणानि यथायथं संहितायामेवोपनिबद्धानि सौकर्यार्थमिति। वस्तुतः संहितान्तर्गतस्य कस्यचिन्मन्त्रभागस्य ब्राह्मणभागैकदेशः संहितायामपरश्च तस्यैव ब्राह्मणभागो ब्राह्मणेऽप्यस्ति। यथा इषे त्वोर्जे त्वेत्यादि[6] त्रयोदशानुवाकात्मकस्य मन्त्रभागस्य किञ्चिद् ब्राह्मणं तृतीयस्यामितो दिवि सोम आसीदिति

१. तै० सं० ४।६।१
२. तै० सं० ४।२।१।४
३. तै० सं० २।५।१-६
४. तै० सं० ४।१।१
५. तै० सं० ३।१।१
६. तै० सं० १।१।१

ब्राह्मणग्रन्थे[1] प्रश्नद्वये विद्यते, तथा च तस्यैव कश्चिद् ब्राह्मणभागो विश्वरूपो वै त्वाष्ट्र[2] इति संहितायामस्ति।

एवमेव ब्राह्मणान्तर्गतस्यापि मन्त्रभागस्य कश्चन ब्राह्मणांशो ब्राह्मणग्रन्थे, कश्चन च संहितायाम्। एवमारण्यकेऽपि। सत्यं प्रपद्ये[3] इत्यस्य ब्राह्मणान्तर्गतमन्त्रभागस्य ब्राह्मणं देवा वै नर्चि न यजुषि,[4] इति संहितायां विद्यते। एवं चित्तिः स्रुगि[5]त्याद्यारण्यकान्तर्गतमन्त्रभागस्य ब्राह्मणं प्रजापतिरकामयतेति[6] ब्राह्मणग्रन्थे निबद्धम्। क्वचित्तु भूमिर्भूम्ना द्यौर्वरिणे[7]त्यादिमन्त्राणां भूमिर्भूम्ना द्यौर्वरिणेत्याहेत्यादिब्राह्मणं[8] सहैवाम्नातम्।

### यजुषां कृष्णत्वविचारः

भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषराहित्येनापौरुषेयाणां वेदानामेकदेशे कथं बुद्धिमालिन्यहेतुत्वात् कृष्णत्वं कीर्त्यतेऽनुचितमित्यस्ति वेदैकपरायणानां श्रद्धालूनां मतम्। इतिवृत्तात्प्रवृत्तेऽत्र हेतौ पूर्वाग्रहकलङ्कपङ्काक्रान्तया मत्या भवितव्यमित्यास्माकीनापि सम्भावना अतोऽत्र कृष्णत्वे कारणानि पूर्वोपदिष्टानि नूतनानि च कानिचिद् वक्ष्यन्ते। तानि तर्कनिकषे प्रयुक्तान्युचितानि न वेत्यत्र मतिमन्त एव प्रमाणम्। तथा हि—

१—सर्वेषां वेदानामुच्चारणपरम्परा विलक्षणाविच्छिन्नसम्प्रदाया साम्प्रतिकसङ्गीतजननी श्रुतिमधुरा च। तत्रापि कृष्णयजुषामुच्चारणमतीव मनोहारि अद्यत्वेऽपि सर्वमुच्चारणजातमतिशेते इति नातितिरोहितं वैदिकानाम्। अतःमोच्चारणाकर्षणहेतुत्वाद् यजुषां कृष्णत्वं भ्वादिगणपठितात् कृष्धातोर्युज्यते।

"तैत्तिरीया इति यजुर्यत्तदा आसन् सुपेशलाः" इति भागवतोक्त्यापि[9] कृष्णयजुषां सुपेशलत्वं सविशेषमवगम्यते सम्भाव्यते च।

---

१. तै० ब्रा० ३।२
२. तै० सं० २।५।१
३. तै० आ० ३।५
४. तै० सं० २।५।७
५. तै० आ० ३
६. तै० ब्रा० २।२
८. तै० सं० १।५।४
७. तै० सं० १।५।३
९. भा० १२।६।६५

२—वाजसनेयिनः वेदोपाकर्मणि श्रावणशुक्लपक्षस्य चतुर्दशीयुतां पूर्णिमां प्रतिगृह्णन्ति। तैत्तिरीयास्तु भाद्रकृष्णपक्षस्य प्रतिपद्युक्तमुपाकर्मणः कालमुपाददते। एवमुपाकर्मणि चन्द्रविचारणायां कृष्णपक्षप्राधान्यात् तेषां कृष्णत्वमिति धर्मशास्त्रनिबन्धकृतः।

३—तैत्तिरीयाणामृषिच्छन्दोदैवतबोधकस्य सर्वानुक्रमणीग्रन्थस्यास्तव्यस्तत्वादपि कृष्णत्वं सम्भवति।

४—कृष्णयजुषां कल्पकृत आचार्या भूयिष्ठाः। तैः संरचितानि विभिन्नानि कल्पसूत्राण्येकस्यैव मन्त्रस्य वैविध्येन विनियोगमुपदिशन्ति। यथा प्रथमकण्डिकायां[1] ध्रुवा अस्मिन् गोपतौ स्यात इत्यादिमंन्त्रः बोधायनेनाध्वर्युकर्तृकयजमानावेक्षणे विनियुक्तः, आपस्तम्बेन च गवां प्रत्यावर्त्तने। एवं हि एकत्रैव बहुविधविनियोगप्रदर्शनात् प्रयोगसाङ्कर्यात् कृष्णत्वम्। अतश्च कृष्णयजुषामेव सौत्रशाखा बह्व्यः स्मर्यन्ते।

५—तैत्तिरीयके मन्त्रब्राह्मणयोरुभयग्रन्थे सङ्कीर्णत्वात् प्रत्यक्षमेव कृष्णत्वं सुवचं भवति।

६—शुक्लयजुर्वेदाविर्भावात् पूर्वं जनेषु याः प्रसिद्धाः शाखास्ताः परापेक्षया यातयामाः, अप्रसिद्धाश्चायातयामाः। यातयामत्वादपि यजुषां कृष्णत्वम्।

७—अथवा सूर्यादधिगतस्य वाजसनेयवेदस्यापूर्वत्वेन निर्मलत्वान्नूतनत्वाच्च शुक्लत्वं शुद्धत्वमभिलक्ष्य। तद्विलोमत्वेन चान्यस्य कृष्णत्वं बलादापतति। वाजसनेयात्पूर्वभाविनो यजुर्वेदस्याध्येतृपुरुषान्तरसम्पर्कवशात् प्राचीनत्वाच्च कृष्णत्वम्।

८—कृष्णयजुषि सारस्वतार्षेयक्रमेणास्ति पाठद्वैविध्यमित्युपरिष्टादालोचयिष्यामः। ततश्च पाठद्वैविध्येनानियतक्रमत्वादपि कृष्णत्वमुच्यते।

९—वान्तस्य (गृहीतपरित्यक्तस्य) वेदस्य तित्तिरिरूपधर्मेण बुद्धिमालिन्यसम्पन्नव्यक्तिधृतत्वाद् यजुषां कृष्णत्वमिति पौराणिकाः।

१०—मन्त्रस्यापूर्णत्वमपि यजुषां कृष्णत्वे कारणम्। पूर्तिस्तु कल्पेन क्रियते, अनुतिष्ठन्ति तथैव च याज्ञिकाः। यथा संवपामि[2] इत्यत्र

---

१. तै० सं० १।१।१, बौ० श्रौ० १।१, आप० श्रौ० १।२।१

२ तै० सं० १।१।८

कल्पानुसारेण देवस्य त्वेति अग्नये अग्नीषोमाभ्यामिति यथादैवतं प्रयोगः। शुक्लयजुषि[1] तु न कल्पापेक्षा मन्त्रप्रयोगे। कृष्णयजुष्यत्र ब्राह्मणं देवस्य त्वेति व्याचष्टे[2]।

११—कृष्णवाचा ( निन्दामुखेन ) कर्तव्यविधानं वा कृष्णत्वकारणम्। यथा—यम् ( अध्वर्युर्यजमानं ) कामयेत पापीयान् स्यादित्येकैकं तस्य जुहुयात् जिह्मस्तिष्ठन्[3], अष्टकण्डिकात्मिका एकाहुतिः युञ्जान इत्यादीनां न कार्या, इत्यादीन्युदाहरणानि। तथा च—यदि कामयेत छन्दांसि यज्ञयशसे नार्पयेयमित्युक्त[4]मित्यग्रिममन्त्रेऽपि जिह्मत्वम्। यदि कामयेत पापवयस्यं स्यादिति गर्दभप्रथमा गच्छेयुः[5], इत्यादीन्यप्युदाहरणानि द्रष्टव्यानि।

एवं यजुषि कृष्णत्वविशेषणस्य प्रवृत्तिनिमित्तानि कानिचिदत्रोपस्थापितानि। व्यासस्य कृष्णद्वैपायनाभिधायामपि कृष्णयजुर्वेदो बलं धत्ते। मन्त्रब्राह्मणात्मकत्वेन द्विधा विभक्तस्य वेदस्य ब्राह्मणशब्दप्रसिद्धिरधुना यथातथमुपलभ्यते, परं मन्त्रभागे संहिताशब्दप्रवृत्तौ कृष्णयजुर्वेदस्यास्ति प्रभावः। वर्णानामेकप्राणयोगस्तत्र स्पष्टः।

## कृष्णयजुर्वेदे पाठद्वैविध्यम्

तैत्तिरीयके द्विविधः पाठः, सारस्वतः पाठ आर्षेयपाठश्च। सारस्वतपाठोऽध्ययनायर्ग्वेदवत्। आर्षेयपाठस्तु प्रयोगाय, नर्ग्वेदे केनचन नाम्ना विद्यते। प्रचलितानि संहिताब्राह्मणारण्यकोपनिषत्पुस्तकानि सारस्वतपाठीयान्युपलभ्यन्त इति न किञ्चिद् विशेषेण वक्तव्यम्।

आर्षेयपाठे काण्डविभागेन क्रमः। यद्यपि सायणभाष्येऽपि तैत्तिरीयसंहितायां सप्तकाण्डानि प्रदर्शितानि, परं तान्यार्षेयपाठीयकाण्डेभ्योऽन्यान्यौपचारिकाणि च विभागमात्रबोधनार्थं व्यवहृतानि। बौधायनगृह्यकाण्डोपक्रमणिकादिषु काण्डशब्दप्रयोगः आर्षेयपाठीयकाण्डपरः। आर्षेयपाठे काण्डानां विभागो बहुविध आचार्यसम्मतः।

---

१. मा० सं० १।२१
२. तै सं० ३।२।८
३. आप० श्रौ० १६।१।५
४. आप० श्रौ० १६।१।६
५. आप० श्रौ० १६।२।४

१—एकस्मिन् मते प्राजापत्य-सौम्या-ग्नेय-वैश्वदेवानीति चत्वारि काण्डानि।

२—मातृदत्तमते स्वायम्भुवं काण्डमधिकमिति पञ्च। चतुःकाण्डपक्षे स्वायम्भुवकाण्डं वैश्वदेवेऽन्तर्विशति।

३ – तृतीयमते उक्तानि पञ्च काण्डानि, आरुणं काण्डं, संहितादेवतोपनिषत्काण्डं, याज्ञिकीदेवतोपनिषत्काण्डं, वारुणीदेवतोपनिषत्काण्डमिति सङ्कलनया नव।

४—वेदपारायणविधौ तु स्वायम्भुवमारुणं च काण्डं नाभिप्रेतमिति तस्मिन् सप्तैव काण्डानि। एतन्मते स्वायम्भुवं वैश्वदेवे, आरुणञ्च काठकत्वसमाख्यानवशादाग्नेयेऽन्तर्भवति।

५—अन्येषां मतेन त्वारुणमाग्नेयेऽन्तर्लीयत इत्यष्टौ काण्डानि। एवमेवान्यमतप्रपञ्चोऽप्युक्तः, स च संस्काररत्नमालादिषु तत्तत्स्थलेष्वीक्षणीयः। पाठद्वैविध्येन विपर्यस्तक्रमेणापि यजुषामेतेषां कृष्णत्वं प्रख्यापितं स्यादित्यवधारयितुं युज्यते। आर्षेयपाठे उपनिषद्भागस्य साङ्कर्येणापि कृष्णत्वमित्यास्माकीना विचारणा। नायं द्विविधः पाठो वेदान्तरेष्विति वैशिष्ट्यमेवास्य यजुर्भागस्य।

## तैत्तिरीयसंज्ञाया अनादित्वम्

शुक्लकृष्णयजुषोः भेदनिरूपणे यदितिवृत्त साम्प्रतमुपलभ्यते तत्र तित्तिरिरूपेण वान्तयजुषां भक्षणात् तानि यजूंषि कृष्णत्वेन व्यपदिष्टानि। तित्तिरिसम्बन्धाच्च तैत्तिरीयाभिधानेनाप्यस्ति कृष्णयजुषां प्रसिद्धिः। परमेतदितिवृत्तं पाश्चात्यैर्भारतीयैरपि तर्कालङ्कृतमतिभिर्विद्वद्धौरेयैर्न सभाजनीयं भवति – इतिवृत्तानां काल्पनिकत्वसम्भवात्, विद्याया मूर्त्तरूपेण वमनादृष्टत्वात्, वान्तग्रहणस्य लोकविद्विष्टत्वात्, संहितास्वेतदितिवृत्तस्यानुपलम्भाच्च। युक्तमेतदिष्टापत्तिश्च। अन्यत्र्येषु ब्राह्मणारण्यकादिष्वनादिषु वेदभागेषु तैत्तिरीयसंज्ञाया एवोपलम्भेन तेषामितिवृत्तानां परकालिकत्वं स्वीकरणीयम्। अन्यथा तैत्तिरीयवेदानामनादित्वमेव व्याहन्येत। अतःतैत्तिरीयसंज्ञायाः किञ्चनान्यदेव प्रवृत्तिनिमित्तमभ्युपगन्तव्यम्। तथा चास्माकं विमर्शः —

१—कृष्णयजुर्वेदे मन्त्रब्राह्मणारण्यकानि सहैव पठ्यन्ते, तच्चाशीतिद्वयसंज्ञापनेन स्पष्टम्। ततश्च त्रीणि मन्त्रब्राह्मणारण्यकानि यस्मिन्

वेदशब्दराशौ सह तरन्ति पठ्यन्ते, असौ तित्तिरिः कृष्णयजुर्वेद इत्येवं व्युत्पत्तिः त्रि+तिर्+इ इति विग्रहेण कर्तुं शक्यते । तित्तिरिसम्बन्धेन तैत्तरीया इति ताः शाखास्तदनुयायिनश्चोच्यन्ते । सोऽयं भावः चरणव्यूहस्य तैत्तिरीय-शाखापरिचायनप्रसङ्गे यजुर्वेदखण्डे—

> त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह ।
> यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः ॥

इति श्लोकेनापि ध्वन्यते ।

२—तैत्तिरीयके मन्त्रब्राह्मणयोः साङ्कर्यं स्पष्टमेव । अतएव त्रीणि मन्त्रब्राह्मणारण्यकानि यस्यां शाखायां यस्मिन् वेदभागे वा तिर इव सम्मिश्रतयान्तर्हितानीव सन्ति, सा शाखा स वेदभागो वा त्रि+तिर+इव इति परोक्षवृत्त्या निरुक्त्या तैत्तिरीयत्वेन व्यवह्रियते ।

एवं तैत्तिरीयसंज्ञाया इतिवृत्तातिरिक्तप्रक्रियया ससाधनेन न प्राच्यपाश्चात्यविदुषां विप्रतिपत्तिः सम्भवति । अत्र नूतनानुसन्धातृभिरव-धानमाधायान्वेष्टव्यमिति दिगियं गृहीतास्माभिः ।

## तैत्तिरीयशाखाध्ययनस्याशीतिद्वयाभिधानम्

तैत्तिरीयशाखाया अध्ययनमशीतिद्वयशब्देनापि व्यवह्रियते सम्प्रदायविद्भिः । द्व्यशीतिप्रपाठकानामध्ययनमेवात्र प्रवृत्तिनिमित्तम् । प्रपाठकानां द्व्यशीतिसंख्यया परिगणनं प्रकारद्वयेन भवति । तत्र प्रथमः प्रकारः—

| | | | |
|---|---|---|---|
| संहितया सह काण्डेषु प्रपाठकाः | — | ४४ | |
| ब्राह्मणस्य काण्डत्रये प्रपाठकाः | — | २५ | |
| काठकस्य प्रपाठकाः | — | ३ | |
| आरण्यकस्य प्रपाठकाः | — | ८ | |
| मन्त्रप्रपाठकस्य (एकाग्निकाण्डस्य) | — | २ | योगः—८२ |

एवं हि सङ्कलनया द्व्यशीतिः प्रपाठकाः । द्वितीयप्रकारे मन्त्रप्रपाठकस्य प्रपाठकद्वयं न गण्यते, अपितु तत्र माधवीयवेदभाष्यमनुसृत्य तैत्तिरीयोपनिष-दन्तर्गतस्य वल्लीत्रयस्यैव प्रपाठकत्वेन परिगणनम् । अतश्चारण्यकस्याष्टौ प्रपाठकाः द्वितीयप्रकारे दश भवन्ति । एवं हि द्वितीयेऽपि द्व्यशीतिः प्रपाठकाः

प्रथमप्रकारपक्षे तैत्तिरीयोपनिषदो वल्लीनामेकप्रपाठकत्वादारण्यक-स्याष्टावेव प्रपाठकाः। भट्टभास्कराचार्येण तैत्तिरीयभाष्योपोद्घाते निर्दिष्टायां काण्डानुक्रमणिकायामेकाग्निकाण्डस्य तैत्तिरीयाध्ययनान्तर्गतत्वमङ्गीकृतम्। भट्टभास्करभाष्यालोचनेनापि तैत्तिरीयोपनिषदन्तर्गतस्य वल्लीत्रयस्यैकप्रपाठ-कत्वमेवावगम्यते।

अत्रेदमवधेयं यन्माधवाचार्यो नैव तैत्तिरीयाध्ययनमशीतिद्वयाभिधानेन द्व्यशीतिपदेन वा बोधयति। माधवीयभाष्यानुयायिभिः कतिपयविचार-कैराचार्यैश्चैकाग्निकाण्डनाम्ना प्रसिद्धौ मन्त्रप्रपाठकावापस्तम्बकल्पसूत्रा-न्तर्गताविति कथ्यते। परन्तु मन्त्रप्रपाठकभागस्य (एकाग्निकाण्डस्य) कल्पसूत्रान्तर्गतत्वेन स्वीकरणं कल्पसूत्रशैलीविरुद्धमेवेति वयं मन्यामहे।

## सामवेदः

वेदानां सामवेदोऽस्मीत्येव भगवद्गीतासु[1] साम्नो महिमा स्पष्टं दृश्यते। आसीदयं वेदः पुरापि सहस्रशाखाभिः सहृदयानाममन्दानन्दसन्दोह-दानदक्षः कल्पतरुकल्पः। सामवेदस्य सहस्रशाखासु इदङ्काले कौथुम-जैमिनीय-राणायनीय-संज्ञास्तिस्रः शाखा उपलभ्यन्ते। तत्र कौथुमशाखायाः भारतस्य दक्षिणोत्तरयोर्द्वयोरपि भागयोः अध्येतारः समुपलभ्यन्ते। राणायनीयशाखायाः स्वशाखीया अध्येतारो न दृष्टाः। गुर्जरमद्रेषु येऽध्येतारस्त एव परस्परमुच्चार-णवैलक्षण्येनान्योऽन्यं राणायनीयत्वेन व्यपदिशन्ति। जैमिनीयत्वेनात्मानं ख्यापयन्तोऽपि सन्त्यल्पीयांसो विद्वांसः। सर्वेऽप्यमी लेखतः स्वरतश्चैकरूपा अपि उच्चारणविधया विभिन्ना दृश्यन्ते। तत्र गुर्जरपाठक्रमः स्वरगतिक-पाठाश्रयो, द्राविडश्चान्तःस्थगतिकपाठाश्रयः। गतिर्नाम सम्प्रसारणम्। एवं महाराष्ट्रिया गानपद्धतिः यज्ञकालिकप्रयोगाश्रया, पश्चिमगौडपद्धतिश्च दैशिकदर्शनाश्रयेति चतुर्णामुपलभ्यमानसामगानक्रमाणां परिचायनम्।

## सामस्वरूपम्

सामाथो यश्च कश्च गेष्णः स स्वरः इत्यादिश्रुतीनां स्वारस्यमासाद्य पूर्वमीमांसादर्शनप्रवर्त्तकेन जैमिनिवर्येण[2] 'गीतिषु सामाख्या' इति सूत्रयता साम गीतिरूपमिति प्रतिपादितम्। ऋङ्मन्त्रस्य गानविधया प्रयोगः साम।

---

१. गीता १०।२२
२. जै० २।१।३६

गीतिप्रकारश्च शास्त्रैकसमधिगम्य एवापूर्वजनक इति तु युक्तमेव। गीतिर्बहुविधा। तत्र गानसमये मन्त्राणां स्वरूपपरिवर्तनं-विकारः, विश्लेषः, विकर्षणं, विरामः, अभ्यासः, लोपः, आगमः, स्तोभः, इत्येभिरष्टभिः कारणैर्भवति। विद्यमानवर्णस्थाने वर्णान्तरोच्चारणं विकार। सन्धिविच्छेदो विश्लेषः। ह्रस्वस्थाने दीर्घस्य, दीर्घस्थाने प्लुतस्योच्चारणं विकर्षणम्। विश्रामो विरामः। द्विस्त्रिरुच्चारणमभ्यासः। वर्णानुच्चारणं लोपः। अधिकवर्णस्योच्चारणमागमः। अनन्वितस्य पदस्योच्चारणं च स्तोभः।

स्तोभः सार्थकनिरर्थकभेदेन द्विविधः। नृमणे, निधीमहि, अग्निष्टपति, इत्यादिकः सार्थकः स्तोभः। हाई, हाऊ, औहो, वाई, इत्यादिको निरर्थकः। द्विविधोऽप्ययं स्तोभः ऋचः पादादौ पठितः अन्वयी इति, पदात् परश्चानुषङ्गी इति परिभाष्यते। सर्वे चैते स्तोभाः 'अक्षरम्' इत्यपि समाख्यायन्ते। स्तोभानामपि कर्षण-लोप-विकारा भवन्तीत्याद्यस्ति बहु विवेचितं, तत्र तत्र ऋक्तन्त्रादिग्रन्थेभ्योऽवगन्तव्यम्।

साम आधारत्वेन यं शब्दराशिमुररीकरोति स मन्त्रविशेषो वैदिकसाहित्ये साम्नो योनिरित्यभिधीयते। तत्र सामवेदे गीतीनां नामानि तत्तदृषिदृष्टत्वात्तत्तन्नाम्ना, प्राप्तव्यफलनाम्ना वा प्रथितानि। यस्य साम्नो मूलं ( योनिः ) ऋङ् न भवति, किन्तु स्तोभपदान्येव यत्र गीयन्ते तदनृक्साम। यथा—

(१) आरण्यकपर्वणि[1] सामयोन्यां दशानुगानं कश्यपव्रतं साम बहुधा गीयते, तेषु पञ्चमं प्रजापतेर्हृदयं नाम कश्यपव्रतं योनिभूताया ऋचोऽक्षरविरहेण स्तोभपदान्येव समादाय गीयते।

(२) आनडुद्व्रते द्वे सामनी, ते द्वे अपि आरण्यकगानस्य[2] अग्निरस्मि जन्मना, इत्यस्यां गीतस्य कश्यपपुच्छसाम्नोऽन्ते अधीते स्तोभपदान्येव गृहीत्वा गीयेते।

(३) सामसुपर्णे[3] दशानुगानानि, तानि सर्वाण्यपि स्तोभपदान्येव समाहृत्य गीयन्ते। न तत्र काचन योनिभूता ऋगस्ति।

---

१. आ० गा० १४२ पृ० ३६०

२. आ० गा० १४७ पृ० ३६३

३. आ० गा० १५६ पृ० ३६७

## सामसंहितास्वरूपम्

'ऋचि अध्यूढं साम गीयते'[1] इत्यादि प्रमाणसत्त्वेन साम्नां योनिभूता ऋचश्छन्दसि आर्चिके प्रायः पठ्यन्ते। सामगानामृक्पाठाय द्वौ ग्रन्थौ विद्येते, तौ च (१) छन्दः, (२) उत्तरा चेति सम्प्रदायविद्भिरभिधीयेते। तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता ऋच एव पठिताः, उत्तराग्रन्थे तु बाहुल्येन तृचात्मकानि सूक्तानि। परमेकर्चान्यारभ्य द्वादशर्चानि यावत्सूक्तान्यपि तत्र दृश्यन्ते। उत्तरायामेकस्मिन् सक्ते योन्यृक् प्रथमा, तदितरायाश्चोत्तरेत्यापेक्षिकी संज्ञा। वस्तुतस्तु योन्यृक् प्रथमा भवत्वेवेति न नियमः। तृचात्मकसूक्तेषु या प्रथमा योनिभूता, तन्नाम्ना छन्दोग्रन्थस्य—योनिग्रन्थः, छन्दः, छन्दःआर्चिकः, पूर्वार्चिकः, इत्येवमप्यध्यापकानां समाख्यानम्। इतरस्य तु तृचादिसङ्घरूपस्य ग्रन्थस्योपरितनई नामधेयेन—उत्तरा, उत्तरार्चिकः—इति प्रसिद्धिः प्रायिकी। यः कोऽपि स्वरक्रमः पूर्वार्चिकपठिताया योनेर्भवति तेनैव स्वरक्रमेण योनिभूतर्क्संयुक्तानामुत्तरार्चिकपठितानामृचां गानं भवतीति साम्प्रदायिका अभिप्रयन्ति।

तत्र पूर्वार्चिके षट् प्रपाठका अध्याया अपि। प्रत्येकं प्रपाठके द्वावर्धौ प्रत्येकं चार्द्धयोर्दश दशतयः। यद्यपि दशर्चमेका दशतिः सामान्यतो भवति, तथापि कासुचिद्दशतिषु न्यूनाधिक्यमृचां दृश्यते। अतः प्रायिकमिदं संज्ञापनम्। पूर्वार्चिकस्य प्रथमाध्याय आग्नेयं पर्व काण्डं वेति व्यपदिश्यते। द्वितीयमारभ्य चतुर्थपर्यन्तमध्यायाः सम्भूय ऐन्द्रं पर्व काण्डं वेति संज्ञाप्यन्ते सम्प्रदायविद्भिः। पञ्चमोऽध्यायः सौम्यं पावमानं वा पर्व काण्डं वाभिधीयते। षष्ठोऽध्याय आरण्यकं पर्व काण्डं वा कथ्यते। अस्य विषये समस्ति वक्तव्यमस्माभिः।

सातवलेकरमहोदयेन पावमानपर्वावसितौ—"इति पूर्वार्चिकः ( छन्दः आर्चिकः ) समाप्तः" - इत्येवं निर्देश उट्टङ्कितः,[2] स च नोचित इति वयं मन्यामहे। पूर्वार्चिकः षडध्यायात्मक एव मन्तव्यस्तदनन्तरमुत्तरार्चिकस्य सत्त्वात्। कुत्रापि खण्डद्वये सति पूर्वोत्तरत्वेनैव व्यपदेशो भवति। एवञ्च आरण्यकाण्डानन्तरं पठितास्वृक्षु, महानाम्न्य ऋच इत्येवं वक्तव्ये महानाम्न्यार्चिकः सातवलेकरमहोदयेनोल्लिखितः[3]। तदेतदाधृत्य वासुदेवशरणा-

१. छा० उ० १।६।१
२. सा० सं० पृ० ६४
३. सा० सं० पृ० ७१

प्रवाळवर्येणापि स स्वीकृत:[१]। परमेतौ लेखौ भ्रममूलकावेवेत्यस्माकं विमर्शः। न हि सामसंहितायामार्चिकत्रयं मध्यमार्चिकं वा कुत्राप्युल्लिखितचरम्। अथ च बळदेवोपाध्यायैरपि महानाम्नीनामृचां परिशिष्टत्वं यदुक्तं[२] तच्चिन्त्यम्, न ग्रन्थमध्ये परिशिष्टसंयोजनमुचितं दृष्टपूर्वं वा।

वस्तुतस्तु अग्न आयाहीत्यारभ्य पुरीषपदान्तो भागः पूर्वार्चिकस्तत्र च महानाम्न्यादिकं सर्वमन्तर्भवतीत्येष शिष्टसम्मतः सम्प्रदायविदनुगृहीतः पन्थाः। एवञ्च षष्ठाध्यायस्यादिमामिन्द्रज्येष्ठमित्यृचमारभ्य पञ्चपुरीषान्तभाग आरण्यकं काण्डमिति सामसम्प्रदायसद्विज्ञानां गुरुवर्याणां श्रीरामनाथदीक्षितपादानां मतम्। वयमपि, महानाम्नीनामृचां गानमारण्यगाने महानाम्नीपर्वत्वेनान्तर्भुक्तं दृश्यत इति संहिताभागेऽपि तस्यारण्यकाण्डान्तर्गतत्वं युक्तमिति प्रतीमः। तदेतेन महानाम्नीनामृचां परिशिष्टत्वमार्चिकान्यतरत्वञ्च व्याहन्यत इति सर्वं समञ्जसम्।

सामसंहिताया उत्तरार्चिकस्यापि विभजनक्रमो द्विधा, प्रपाठकात्मक एकोऽध्यायात्मकश्चापरः पूर्वार्चिकवत्। तत्र सङ्कलनया नवसु प्रपाठकेषु पञ्चमपर्यन्तं प्रत्येकं प्रपाठके द्वावर्धौ, शिष्टेषु तु प्रत्येकमर्द्धत्रयम्। एवमुत्तरार्चिके द्वाविंशतिरर्द्धाः। अध्यायक्रमेणैकविंशतिरध्यायाः। इदमध्यायविभजनं श्रौतयज्ञेषु विनियोगमनुलक्ष्य विहितम्। तत्राद्येष्वेकादशस्वध्यायेषु दशरात्रप्रयोक्तव्यानां त्रिवृदादिस्तोमानां क्रमेणर्चामुपदेशः। द्वादशत्रयोदशाध्याययोः संवत्सरे, चतुर्दशमारभ्य षोडशपर्यन्तमेकाहे, सप्तदशाष्टादशयोरहीने, एकोनविंशे सत्रेषु, अन्त्ययोश्चाध्याययोः प्रायश्चित्तक्षुद्रप्रयोगेषु च प्रयोक्तव्याः साममन्त्राः समुक्ताः।

## गानग्रन्थाः

एतस्याः संहिताया ऋचः आश्रित्यर्षयः सामगानानि प्रकाशयामासुः। तानि च गानानि चतुर्षु गानपुस्तकेषु समुपदिष्टानि। तेषु प्रथम वेयगान, ग्राम(मे)गेयगानापरनामधेयम्। वेयगाने त्रीणि काण्डानि पर्वाणि वाग्नेयैन्द्रपावमानाख्यानि। एतदवान्तरोऽपि प्रपाठकादिक्रमेण विभागो वर्तते।

द्वितीये चारण्यगाने अर्कपर्व-द्वन्द्वपर्व-( वाचो )-व्रतपर्व-शुक्रियपर्व-महानाम्नीपर्वाणीति पञ्चधा विभागः। ग्रामगेयारण्यकगाने सम्भूय प्रकृति-

१. सा० त० भू० पृ० ६
२. वै० सा० सं० पृ० १५३

गानमिति संज्ञाप्येते सम्प्रदायविद्भिः। वैरूपगानमारभ्य महानाम्नी-भागान्तस्यारण्यकगानमिति संज्ञा। वैरूपाण्यष्टौ, तत्राञ्जो वैरूपमित्याद्या गीतीनां संज्ञाः। संहितायामारण्यककाण्डे स्थितानां योनिभूतानामृचां क्रमेणारण्यकगाने न गानानामुल्लेखो दृश्यते ततश्चारण्यकाण्डमाधारीकृत्यारण्यगानं नास्तीति न शङ्कनीयम्। आरण्यकाण्डे बहूनि सामानि स्तोभारूढानि, आग्नेयैन्द्रपवमानपठितर्गारूढानि, आरण्यकाण्डीयर्गारूढानि च। यथा वा—देवव्रतानि स्तोभारूढानि, यद्यावह इत्यादीनि पूर्वपठितास्वृक्षु गीतानि, तथा चान्यानि प्रकृतर्क्षु गीतानि। तत्र गानाधारभूता ऋचः पूर्वमधीता इति तासां गानान्यारण्यकगाने समधीयन्ते।

अथारण्यकगानस्य संज्ञापनप्रवृत्तिनिमित्तविषये किमपि विचार्यते। बृहदारण्यकोपनिषद्भूमिकायां भगवत्पादैः "अरण्येऽधीयेरन्" इति श्रुत्यनुमोदनेन यस्य भागस्यारण्येऽध्ययनं तदारण्यकमित्युक्तम्। तदेतत्सर्वमाधारीकृत्य बलदेवोपाध्यायवर्यैरुपकल्पितं[1] यद्—"ग्रामगेयगानं ग्रामे समाजे गेयं भवति, आरण्यगानोक्तानि तु सामान्यरण्ये एव गेयानि। आरण्यगानस्तोभानां वैचित्र्याद् वैलक्षण्याच्च तेषां ग्रामेषूच्चारणेऽनर्थः सम्भाव्यते। तेषामतिपवित्रत्वादप्यरण्यस्य पूतवातावरणे एव तेषां गानं, फलप्रदत्वञ्चेति"। एवमेव वासुदेवशरणाग्रवालमहोदयेनापि गृहे ग्रामे वा गेयानि ग्रामगेयानि सामानीत्यभिप्रेतम्[2]। तदेतन्मतं न युक्तितर्कसहमिति वयं प्रतीम। तथा चात्र हेतवः -

१—आरण्यगानोक्तानि सामान्यपि विभिन्नेषु श्रौतप्रयोगेषु विनियुक्तानि। सोमयागादीनां महतामपि श्रौतप्रयोगाणां कृते देवयजनप्रदेशस्तु—"उच्चतमं सममविभ्रंशि[3], उद्धतौषधिमूले[4]" इत्याद्याचार्यवचनैर्नारण्ये कर्तुं शक्यते। न खल्वरण्ये सममुद्धतौषधिमूलं वा क्षेत्रमल्पायासेन विधातुं शक्यम्। अतो ग्रामप्रदेशेष्वेव क्रियमाणेषु श्रौतयज्ञेषु आरण्यगानसाम्नां विनियोगव्याघातापत्तिः पूर्वपक्षे।

---

१. वै० सा० सं० पृ० १६२

२. सा० त० भू० पृ० ५

३. का० श्रौ० ७।१।११

४. का० श्रौ० ७।१।१२

२—अग्निमीडे पुरोहितम्[१], सहस्रशीर्षा पुरुषः[२], चित्रं देवाना[३]-मित्यादयः प्रथिता मन्त्रास्तेषां गानप्रयोगाश्चारण्यभागान्तर्गताः साम्नि। अन्यवेदोक्ता अपीमे मन्त्राः स्वाध्याये समुच्चार्यमाणाः, कल्पान्तरैरपि ग्राम एव क्रियमाणेषु श्रौतस्मार्तेषु पूजनसूर्योपस्थानादिषु कर्मसु विनियुक्ताः। स एवारण्याध्येयत्वेन सामवेदोक्ता भवन्तीति न विचारसहं भवति।

३—गृह एव गेयत्वाद् ग्रामगेयगानमित्यपि न युज्यते, ग्रामगेयसाम्नामपि श्रौतयज्ञार्थकत्वात्। न गृहस्य समाजस्य वापेक्षा भवति तेषां प्रयोगेऽपितु देवतोद्देशेन द्रव्यत्यागात्मकस्य यागस्यैव तत्रावश्यकता।

४–यत्तु आरण्यकगानस्य ग्रामेषूच्चारणेऽनर्थः कल्प्यते तदसमीचीनतरम्। न हीष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायबोधकस्य वेदैकभागस्याध्ययने क्कुत्राप्यनर्थः कथमपि सम्भवतीत्यस्माकं सुदृढः प्रत्ययः। न चात्र प्रत्यक्षप्रमाणोपलम्भः। अथ चारण्यस्य पूतवातावरणे सामविशेषप्रयोगः फलाधायक इत्यपि न वक्तुं युज्यते। प्रयोगमन्तरेणारण्येषु साम्नामुच्चारणेऽरण्यरोदनवदरण्यनर्त्तनवद् वा न कोऽपि श्रोता द्रष्टा वा तत्रोपलभ्येत, प्रयोक्ता चोपहासपात्रं स्यात्।

अतो ग्रामेगेयारण्यकगानयोरभिधानेऽन्यदेव प्रवृत्तिनिमित्तमन्वेष्टव्यम्। तथा चास्माकं प्रयासः—

१ प्रथमगानस्य ग्रामगेयमिति संज्ञापनं सामसु स्वरग्रामप्रयोग[४]-मनुलक्ष्य कृतं स्यादिति सम्भाव्यते। प्रथमगानाभिधानस्य ग्रामपदघटितत्वात् तदितरस्यारण्यगानमारण्यगेयगानं वेति संज्ञापनमापेक्षिकं मन्तव्यम्, न त्वन्वर्थम्।

२—अथवा आसमन्ताद् रण्यं रमणीयमित्येवंविधया व्युत्पत्त्या हृदयावर्जकत्वादारण्यकाभिधानमन्वर्थं मन्तव्यम्। आरण्यकाख्यवेदभागस्य परिचायनप्रसङ्गेऽस्माभिरुपस्थापितो विचारोऽप्यत्र द्रष्टव्यः।

३—सातवलेकरमहोदयेनारण्यकगानस्यारम्भणे तस्य "गेयगानम्"

---

१. आ० गा० ६०८

२. आ० गा० ६१७

३. आ० गा० ६२९

४. द्र० ना० शि० "सप्त स्वरास्त्रयो ग्रामाः"।

इत्यपरं नामधेयमपि निर्दिष्टम्[1]। कुत्रास्य मूलमिति न वयं जानीमहे, सम्प्रदायविद एवात्र प्रमाणम्। तदिदं संज्ञापनमुचितं चेत् प्रथमगानस्य वेयगानमपरस्य च गेयगानमिति नामनी भवतः। एतच्चाभिधानं पूर्वगानस्य वेयमिति (द्वयमपि वा) सायणादिभिर्व्यवहृतत्वात् प्राचीनतरं प्रतीयते, ग्रामगेयारण्यकप्रसिद्ध्यपेक्षया। ततश्च वेयगेयनामभ्यां सर्वं सुस्थं भवति।

यत्तु आरण्यगानोपोद्घाते नारायणस्वामिदीक्षितैरारण्यकगानस्य 'छन्द. साम' इत्यपरं नामधेयमुपकल्पितं, तच्चास्य छन्दार्चिकत्वम्[2]। तदुपोद्बलकरूपेण च—"छन्दोऽभिधाभूद् व्याख्याता, व्याख्यास्यत्युत्तराभिधाम्" इति सायणोक्त उत्तरार्चिकभाष्यभूमिकास्थः कारिकांश उद्धृतः, रुद्रस्कन्दवररुचिवाक्ये चोट्टङ्किते। तदिदं मतमसमञ्जसमेवेति वयं प्रतीमः। छन्दः, छन्दः आर्चिकः'—एवं हि अन्तर्भुक्तारण्यकाण्डस्य पूर्वार्चिकस्य समग्रस्याभिधानं भवति, न केवलमारण्यकाण्डस्यारण्यगानस्य वा। दीक्षितैरुद्धृतया सायणोक्त्यापीदमेव स्फुटीभवति। यत्तु बलदेवोपाध्यायवर्यैर्वेयारण्यकगानयोर्योनिगानत्वमुक्तं,[3] तत्रापि केषाञ्चिदस्ति विमतिः। यतो ह्युभयत्र मांकि १५०० गानानि सन्ति, तेषु २६४ एव योनिसामानि।

तृतीयो गानग्रन्थ ऊहाख्यश्चतुर्थश्चोह्याख्यः। तदनयोर्नामपदप्रयोगस्य निदानमपौरुषेयत्वादिकञ्च श्रीमद्रामनाथदीक्षितगुरुपादैरूहगीतेः भूमिकाभागे सम्यगालोचितमिति तत एवावगन्तव्यम्[4]।

संहितोपनिषद्ब्राह्मणे—"अथैषा शुद्धा संहिता भवति"[5] इत्यनेनार्चिकसंहितायाः, "अथैषा समावर्तनीया",[6] "अथैते आनुदेशिक्यौ"[7] इत्यनेन गानसंहितायाश्च लक्षणं कृतमथ च पूर्वार्चिकसंहितया सह ग्रामेगेयारण्यकगानयोः, उत्तरार्चिकसंहितया सह चोहोह्यगानयोः सम्बन्धः प्रदर्शितः।

---

१. ग्रा० गा० पृ० ३०७

२. आ० गा० भू० पृ० ३

३. वै० सा० सं० पृ० १६१

४. ऊ० गा० भू० पृ० २६

५. सं० उ० ब्रा० १।१८

६. सं० उ० ब्रा० २।१

७. सं० उ० ब्रा० ३।१

पूर्वार्चिकयोनिमन्त्राः पञ्चाशदधिकषट्शत-( ६५० )-सङ्ख्याकाः। तदनुसारेण ग्रामेगेयारण्यकगीत्योः सम्भूय चतुर्नवत्युत्तरच दशशतसङ्ख्या-कानि ( १४९४ ) गानानि। उत्तरार्चिकमन्त्राः पञ्चविंशत्युत्तरद्वादशशत-( १२२५ ) सङ्ख्याकाः। तदनुसारेणोहगीतौ षट्त्रिंशदुत्तरनवशतसङ्ख्याक-( ९३६ )-गानानि। एवञ्चोह्यगीतौ नवाधिकद्विशतसंख्याकानि ( २०९ ) गानानि वर्तन्ते। अत्र सङ्ख्यापरिगणने विदुषां मतभेदोऽपि दृश्यते।

प्रायः सर्वेष्वपि सामसु निर्दिश्यन्ते ऋषिच्छन्दोदेवताः। परं कानिचन एतादृशान्यपि सन्ति सामानि येषु ऋष्यादयो न साम्प्रदायिकैः स्मर्यन्ते, न वा तेषां निर्देशो ग्रन्थेषूपलभ्यते। यथा सामसुपर्णे[1] दश सामानि, तेष्वात्म-स्वरूपं सामैकं वर्जयित्वा नवानां साम्नामृष्यादिकं नास्ति।

## साम्नामुच्चारणपरम्परा

यागमहायागादिशुभप्रसङ्गेषु सामस्तोत्रप्रयोगे पाञ्चविभक्तिकं साप्तविभक्तिकं वा स्तोत्रगानं विभागेन प्रस्तूयते—प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनञ्चेति। सम्प्रदायसम्प्राप्तस्वरगानपठनदक्षाः सामगाः गानावसरे पाञ्चविभक्तिकमेव गानं स्वरयन्ति। परन्त्वन्येषां जिज्ञासूनां कृते पाञ्चविभक्तिकगानप्रयोगो न सम्यगवगतो भवतीति दृष्टान्तपुरस्सरमत्र पाञ्चविभक्तिकगानावगमः प्रकाश्यते।

"उत्तमपादादौ पर्वप्रतिहारः सन्याख्यः" इति पञ्चविधसूत्रभाष्ये प्रतिपादितं यदन्तिमपादस्यादावुपक्रमे पर्वप्रतिहारः स्यात्। 'इन्द्रो विश्वस्य' इत्यत्र द्व्यक्षरशः, द्वयोर्द्वयोरक्षरयोर्विभागो भवति। यथा—'इन्द्रोऽ३४' इति प्रस्तावः, 'विश्व' इत्युद्गीथः, 'स्यरा' इति प्रतिहारः, 'जति हो २३४५' इत्युपद्रवः, 'इडा' इति च निधनम्। 'इन्द्रो विश्वस्य राजति' इत्येकपदा ऋक् पूर्वार्चिके समाम्नाता[2]। ग्रामेगेयगीतौ तामाश्रित्य वैराजे गाने समाम्नाते। प्रथमगानस्य स्वरूपमित्थम्—

'इन्द्रोऽ३४ ॥ विश्वस्यरा ॥ जति होऽ२३४५ इ ॥ डा ॥'

अत्र क्रमेण 'इन्द्रो' प्रस्तावः, 'विश्व' उद्गीथः, 'स्यरा' प्रतिहारः, 'जति' उपद्रवः, 'इडा' निधनमिति पाञ्चविभक्तिकप्रयोगस्य विभागः स्पष्टतया प्रतीयते। एवं हि सर्वेषां गानानां पाञ्चविभक्तिकप्रयोगावगमः।

---

१. आ० गा० १५६ पृ० ३९७

२. सा० सं० ४५६

पञ्चविधसूत्रभाष्ये प्रस्तावभक्तिविषयको द्वितीयो दृष्टान्तो निर्दिष्टस्तद् यथा—वाचोव्रतपर्वारम्भे यद् गानद्वयं निर्दिष्टं तत्र द्वितीयगाने[1] - हुवाइ वाचाम् इति प्रस्तावः, वाचं हुवाइ इत्यन्तो वा प्रस्तावः। अनयोर्गानयोर्मूलं न ऋगपितु स्तोभः[2]। आर्षेयब्राह्मणेऽपि तस्योल्लेखः। साप्तविभक्तिकगाने तु हिंकारः आदिश्चेति विभक्तिद्वयं वर्द्धते।

'इन्द्रस्य वैराजे द्वे' इत्यस्य सायणभाष्ये[3] निर्दिष्टं यदिन्द्रो विश्वस्य रा-इति तृतीयाद्वितीयादिकम् इति। अस्येदं तात्पर्यम्—यदवसरे वैराजगानं गीयेत तदवसरे द्वितीयतृतीयस्वराभ्यां प्रारम्भः करणीय इति। गानप्रयोगे सप्तस्वराणां निर्देशः सामविधानब्राह्मणे शिक्षाग्रन्थेषु च समुक्तः। तदनुसारेण स्वरसंयोजना क्रियेत चेद् गान्धर्ववेदस्य स्वरसङ्गतिः सुतरां सुखावहा भवति। एवञ्च साममन्त्रनिबद्धगानानां, कतिपयस्थलेषु योन्यृचमन्तरापि स्तोभादिवर्णपदवाक्यप्रदानेन सामगानानां स्वरूपं सङ्ग्रथितं परमकारुणिकैर्ऋषिप्रवरैः।

## सामस्वरसञ्चारस्तत्प्रदर्शनञ्च

नारदीयशिक्षायां सप्तसामस्वरा इत्थं संलक्ष्यन्ते[4]—

> यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः।
> यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः॥
> चतुर्थः षड्ज इत्युक्तः पञ्चमो धैवतो भवेत्।
> षष्ठो निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः॥ इति।

इमे एव क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्रा-तिस्वार्याः, क्वचिच्च क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-पञ्चमा-न्त्याः, गान्धर्ववेदे पञ्चम-मध्यम-गान्धार-र्षभ-षड्ज-निषाद-धैवताः प्रसिद्धाः। अत्र नारदीयोक्ते क्रमे धैवत-निषादयोर्विपर्यासो विद्वद्भिः समन्वेतव्यः। सामस्वराणां करवीणास्पर्शेण प्रदर्शनमेवमुक्तं नारदेन[5]—

> अङ्गुष्ठस्योत्तमे क्रुष्ट अङ्गुष्ठे प्रथमः स्वरः।
> प्रदेशिन्यां तु गान्धार ऋषभस्तदनन्तरम्॥

---

1. आ० गा० १६८
2. स्तो० प० ११२
3. आ० ब्रा० ४।११।१०
4. ना० शि० ४।१
5. ना० शि० १।६।३

अनामिकायां षड्जस्तु कनिष्ठायां तु धैवतः ।
तस्याधस्ताच्च यो‌ऽन्यस्तु निषादं तत्र निर्दिशेत् ॥ इति ।

तदिदमाधृत्यास्माभिः सम्प्रदायसमाराधकसमादृतं स्वरसञ्चारे सामवेदीयस्वरप्रदर्शनं स्फुटीक्रियते ।

सामसंहितायां तु मध्यमगान्धारर्षभाख्य एव स्वराः क्रमेण स्वरितोदात्तानुदात्ता भवन्ति । सामगाने—मध्यमगान्धारर्षभषड्जधैवतनिषादपञ्चमाः इति क्रमेण सप्त स्वराः क्रियन्ते । तत्र मध्यमाख्यप्रथमस्वरेऽङ्गुष्ठस्य स्वरप्रदर्शनार्थं हस्तो रिक्त एव स्थाप्यते । गान्धारेऽङ्गुष्ठेन प्रदेशिन्याः मध्यं पर्व स्पृश्यते । ऋषभेऽङ्गुष्ठेन मध्यमाङ्गुलिपर्वं, षड्जेऽनामिकामध्यपर्वं, धैवते कनिष्ठिकामध्यपर्वं, निषादे कनिष्ठिकामूलम्, पञ्चमे प्रदेशिन्यग्रञ्च स्पृश्यते ।

यस्य वर्णस्योपरि ^ एवंविधं चिह्नं तस्यैषद्दीर्घमुच्चारणं, प्रदेशिनीमध्यस्य संस्पर्शेन किञ्चित् पीडनं, हस्तस्य तिर्यग्भावश्चापि स्वभावतः किञ्चिद् भवति । यत्र दण्डरेखासदृशं— चिह्नं तत्र प्रदेशिनीमारभ्य कनिष्ठिकापर्यन्तामामङ्गुलिपर्वणां स्पर्शनम् । यत्र उ—एतच्चिह्नं भवति तत्र पूर्ववत् प्रदेशिनीमारभ्य कनिष्ठिकान्तं कनिष्ठिकामारभ्य प्रदेशिनीं यावच्च स्पृष्ट्वा मध्यमां करान्तः क्षिप्त्वा ब्राह्मतीर्थसंस्पृष्टां कुर्वन्ति । यत्र क एवंविधं लक्ष्म तत्र मध्यमाग्रमारभ्य मूलं यावत् स्पर्शः । यत्र १११ २३४५ एवंविधः स्वरसञ्चारस्तत्र प्रदेशिन्या अग्रमारभ्य कनिष्ठिकां यावदङ्गुलीनामग्रस्पर्शः । यत्र वर्णस्योपरि ९ अङ्कितं तत्र प्रदेशिनीमूलमारभ्याग्रं यावत् स्पर्शः ।

यत्र वर्णोपरि र अक्षराङ्कनंस्तत्र वामहस्तेन परिगणनमङ्गुलीनामन्तःप्रक्षेपद्वारा कनिष्ठिकामारभ्यामन्त्रान्तम् । एवं हि विशिष्टः स्वरसञ्चारः सामगेषु । तथा चोच्चारणेऽपि विशेषः । यथा विरामे विसर्गस्य सानुनासिकोच्चारणम्, अनुनासिकस्योच्चारणञ्च ङकारसदृशमेव प्रायशः । दीर्घस्य ऋकारस्य रे इत्येवमुच्चारणम्, ह्रस्वस्यापि ऋकारस्य षकारहकारयोर्योगे रे इत्येवंविधमुच्चारणं भवति । एवमन्यदपि परम्परागतोच्चारणवैशिष्ट्यं विद्यते, तच्च श्रुतिवचोविसरैः पवित्रिताधरेभ्यो वैदिकेभ्य एवावगन्तुं शक्यत इत्यलं पल्लवितेन ।

वेदान्तरेषु तु सप्तस्वरा एते त्रिष्वेवान्तर्भवन्ति । तथा च याज्ञवल्क्यशिक्षायाम्[1]—

---

१. या० शि० १।७, १।६

उच्चौ निषादगान्धारौ नीचावृषभधैवतौ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः॥ इति।

सङ्गीतरत्नाकरेऽपि—

द्विश्रुतिकौ निषादगान्धारौ त्रिश्रुतिकावृषभधैवतौ।
चतुष्कश्रुतिका ह्येते षड्जमध्यमपञ्चमाः॥ इति।

गान्धर्ववेदः सामवेदस्याङ्गरूप उपवेदो वेति वर्त्तमानसङ्गीतशास्त्रस्यापि मूलं सामगानं वर्तते। एवञ्च समन्वयरीत्या लोकव्यवहारपद्धत्या च वेदमन्त्राणां गानप्रणालिका सङ्गीतकोविदैरादरणीया भवेत्। प्राचीनसस्वरपाठप्रणालिकामनुसरन्तः श्रुतिमुखास्तु वन्द्याः समादरणीया एवेति।

## अथर्ववेदः

ऋग्यजुःसामाथर्वाण इति क्रमेण लोकव्यवहारेऽथर्ववेदस्य चतुर्थं स्थानमस्ति। एतत्तुरीयं स्थानमेतस्य वेदस्यावरताकारणेन नास्ति, किन्तु पूर्वेषां त्रयाणां वेदानां सुरक्षार्थं, तत्तद्वेदोक्तकर्मणां दाढर्याय च सर्वोपकारित्वादन्ते वेदस्यास्य स्थानमुपकल्पितम्। अतएवर्गादित्रयाणां वेदानां कर्मसु शैथिल्यसम्भवे तत्सन्धानाय प्रायश्चित्ताख्यं कर्म वेदेनानेन क्रियते। कर्मण्याधिदैविके आधिभौतिके वोपद्रवे सम्भवत्यथर्ववेद एव शरणम्भवति। अथर्ववेदस्य ज्ञाता भवति ब्रह्मा ऋत्विक्। प्रायश्चित्ते कर्मणि रक्षार्थे च कर्मणि स एव ब्रह्मा कर्तुमधिक्रियते। एतच्चर्ग्वेदेन स्वयमेव कण्ठरवेणोच्यते[1]—

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः॥

मन्त्रमिमुदाहृत्य भाष्यकृता सायणाचार्येण होता, उद्गाता, ब्रह्मा अध्वर्युः—इति चतुर्णां मुख्यानामृत्विजां वेदसम्मतत्व साधितम्। तेषु होता ऋग्वेदप्रोक्तं कार्यं सम्पादयति, सामवेदोक्तमुद्गाता, यजुर्वेदोक्तञ्चाध्वर्युः। ब्रह्मनामकश्चतुर्थो मुख्यः पुरुषो यज्ञे कृतस्याकृतस्य च निरीक्षणं सम्पादयन्नध्वर्युप्रभृतिभ्य ऋत्विग्भ्यो यथावसरं कर्मकरणायाज्ञां ददाति। एवञ्च स ब्रह्मा, यज्ञकर्मणि यदि ऋत्विजां प्रमादादज्ञानाद् वा भ्रेषः अन्यथात्वं वा भवति तदा यज्ञकर्मणो वैकल्यनिरसनाय प्रायश्चित्त करोति। सोऽयं वैकल्यनिरासः

---

१. ऋ० १०।७१।११

अथर्ववेदोक्तेनैव कर्मणा सम्भवतीत्येतस्मात् कारणादयं वेदो ब्रह्मवेद इति ब्रह्मर्त्विक्सम्बन्धेन कथ्यते । यद्यप्यृग्वेदीयादिब्राह्मणसूत्रग्रन्थेष्वपि यत्र तत्र ब्रह्मकर्म प्रतिपादितमास्ते, परं तदपूर्णमस्तीतिकृत्वा न तद् ब्रह्मणा पूर्णतया समादरणीयं भवति । बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति[1] इत्युक्त्यापि अपूर्णं ब्रह्मकृत्यं न क्षेमाय कल्पेत । अतएव भगवता आश्वलायनेन यजुर्वेदे सामवेदे च यत्र तत्रोपदिष्टस्य हौत्रकर्मण अकृत्स्नत्वादनुपादेयत्वं सूचितम्, यथा

> तद् ये केचन छान्दोग्ये वाऽध्वर्यवे वा हौत्रामर्शाः
> समाम्नाताः, न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य । इति[2] ।

वस्तुतः ऋगादिवेदानां हौत्रादिकर्तव्यप्रतिपादनपरत्वादथर्ववेदस्यापि ब्रह्मकर्मप्रतिपादकत्वेन महत्त्वं सुसिद्ध्यति ।

गोपथब्राह्मणे[3] ऋग्यजुःसामभिस्त्रिभिर्वेदैर्वाक्पक्षात्मकं यज्ञस्यार्द्धशरीरं संस्क्रियत इत्युक्तम् । अर्द्धयज्ञशरीरञ्च केवलेनाथर्ववेदेन संस्क्रियत इत्येवमपि वेदस्यास्य माहात्म्यं ज्ञायते । अयमेव भाव ऐतरेयब्राह्मणेऽपि[4] यज्ञस्य वाङ्मनोरूपवर्तनीद्वयरूपकेणोक्तः । गोपथश्रुतिषु अथर्ववेदविदो ब्रह्मत्वेन वरणमथर्वानभिज्ञब्रह्मवरणे च यज्ञस्य रिक्तत्वं श्रेयश्चोच्यते ।

एतस्याः सृष्टेर्मूलपुरुषो ब्रह्मास्तीति पुराणेषु प्रसिद्धम् । एष एव ब्रह्मा वेदे प्रजापतिशब्देनाप्युक्तः । ब्रह्मणा सृष्ट्यादौ स्वीयज्येष्ठपुत्राय कश्चन वेद उपदिष्ट इति—"अथर्वाय ज्येष्ठपुत्राय प्राह" इति श्रूयते[5] । सोऽयं ब्रह्मणो ज्येष्ठः पुत्रोऽथर्वः अथर्ववेदस्य वेदर्षिरस्ति । ज्येष्ठः पुत्रो विशिष्टं दायभागं लभत इति धर्मशास्त्रेषु दायभागप्रकरणे साधितम्[6] । तेनेदं कल्पयितुं शक्यते यज्ज्येष्ठपुत्रत्वाद् ब्रह्मणा अथर्वाय कश्चन विशिष्ट एव वेदोऽध्यापितः । ततश्च ज्यैष्ठ्याद् विशिष्टभागत्वाच्चाथर्ववेदस्य वेदान्तरेभ्यो महिमातिशयः स्पष्टं जागर्ति ।

---

१. मं० भा० १०।१।२६७
२. आ० श्रौ० ८।१३।३२
३. गो० ब्रा० ३।२
४. ऐ० ब्रा० ५।३३
५. मु० उ० १।१।१
६. ज्येष्ठं वा श्रेष्ठभागेन ( या० स्मृ० व्य० ११४ )

अथर्वनाम्नो निर्वचनेनापि महत्त्वमस्य स्फुटीभवति। तथा हि अथर्व-शब्दो निरुक्तकृता यास्काचार्येण 'थर्वतिश्चरतिकर्मा, तत्प्रतिषेधः'—एवं चरतेर्गत्यर्थस्य प्रतिषेधेन निरुक्तः[1]। एष च प्रतिषेधः स्थिरप्रकृतित्वेन भाष्यकृता दुर्गाचार्येण व्याख्यातः। ततोऽथर्वशब्देन स्थिरप्रकृतिर्वेदः स्थिरत्व-प्रतिपादको वा वेद इति स्पष्टं ज्ञायते। अतएव मनुना राज्ञः पुरोहितोऽथर्व-विदवश्यं भवेदिति समुद्घोषितम्, अथर्ववेदविदः पुरोहितस्य सत्त्वेन राज्ञि राजकर्मसु प्रजासु वा दैवान्मानुषात् परचक्रभयाद् वोत्पन्नमस्थिरत्वमथर्वविदा पुरोहितेन स्थिरतापादकेन स्वीयेनाथर्ववेदोक्तेन कर्मणा शमयितुं शक्यत इति हेतोर्जागरूकत्वात्। तथा च राज्ञः, राजकर्मणः, प्रजानाञ्च भयनिवर्तकत्वात् स्थितिसाधकत्वाच्चास्त्यथर्ववेदस्य विशिष्टं स्थानम्।

गोपथे[2]—'तद् यदब्रवीदथ अर्वाङेनमेतासु अप्सु अन्विच्छेति, तदथर्वाऽभवत्, तदथर्वणोऽथर्वत्वम्'—इत्यथर्वपदस्य निरुक्तिरुच्यते। अत्र हि—अथ, अर्वाङ्, अन्विच्छ, इत्यंशत्रयस्य अथ + अर्वा + अन् भागान् पूर्वरूपादिसन्धिमापाद्य अथर्वन् शब्दः साधितो वर्तते। अनेन विश्लेषणेनायमर्थः प्रस्फुटति यत्—अथ = मङ्गलम् अर्वाङ् = सम्मुखस्थिते मन्त्रगणे, अन्विच्छत = गवेषयत इति। एवञ्च व्यक्तेः समस्तायाः सृष्टेर्वा मङ्गलमत्र वेदे गवेषणेन समुपलभ्यत इति सर्वतोमुखमङ्गलदायिनो वेदस्य को नाम महत्त्वं न स्वीकुर्यात्। वेदस्यास्य बहवो मङ्गलदायिनः प्रयोगाः परिशिष्टेषु अथर्वविधानग्रन्थेषु कौशिकगृह्यादिकल्पग्रन्थेषु च वर्णिताः सन्ति। केचन अनुल्लिखिता अपि प्रयोगाः सम्प्रदायवित्सु विद्वत्सु तत्त्वज्ञेषु महात्मसु च सम्प्रत्यपि चमत्कारकारि तत्त्वं सन्दधत इति वेदस्यैतस्य सुखदायिनः प्रयोगा-नुपलक्ष्य पाश्चात्त्यविचारका अप्यथर्वशब्दमेवमेव व्याचक्षते।

पाणिनीयधातुपाठे थुर्वीधातुर्हिंसायामर्थे वर्तते[3]। हिंसा नाम क्रियमाणस्य कर्मणो वर्तमानस्य जीवस्थितेर्मानवाभिलाषस्य वा न्यूनतापादन-मस्तित्वनिरासो वा। एवंविधानां सर्वासां हिंसानां निवारणायायमथर्ववेदो लघून् गुरूंश्च प्रयोगानुपायत्वेन निर्दिशति। अतश्च सर्वविधन्यूनतापरिहार-साधकत्वादथर्वस्यान्वर्थतयाथर्ववेदस्य महत्त्वं सुसिद्धयति।

---

१. नि० ११।२।१७

२. गो० ब्रा० पू० १।४

३. पा० धा० ५७१

अथर्ववेदस्य लक्षणमेवमामनन्ति—कर्मश्लेषसन्धानबोधकः शान्तिक-पौष्टिका-भिचारिकादिलोकहितावहकर्मप्रतिपादकः क्षुद्रजनीनसर्वविधाभिलाष-पूरणपरश्च वेदोऽथर्ववेद इति। सोऽयमथर्ववेदः श्रौते कर्मणि ब्रह्मनामकस्य ऋत्विजः कर्मप्रतिपादकत्वाद् ब्रह्मवेद इति, रोगादिशमनकारिप्रयोगोपदेशाद् भैषज्यवेद इति, क्षत्रस्य पुरोहितद्वारा राष्ट्ररक्षाविधायकत्वात् क्षत्रवेद इति च नामभिर्बहुभिर्व्यवह्रियते। अथर्ववेदस्य विशिष्टानुशीलनतत्परा आसन् केचनर्षयः। तेषु भृगवोऽङ्गिरसोऽथर्वाणश्च मुख्याः। अतएव-अङ्गिरोवेद, भृग्वङ्गिरसां वेदः, अथर्वाङ्गिरसां वेद इति च संज्ञा अप्यस्य समुपलभ्यन्ते। सोऽयं नानानामभिः प्रथितो वेदो वेदात्मकस्य पुरुषस्य मुखस्वरूपः। तथा चाथर्ववेद एव श्रूयते—सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम्, इति[1]। मुखं ह्यवयवेषु मुख्यम्। तस्मान्मुख्यत्वादथर्ववेदस्य महत्त्वं सर्वप्रकृष्टं मन्तव्यम्।

## अथर्ववेदशाखाः

चरणव्यूहे अथर्ववेदस्य नव शाखाः प्रतिपादिताः—पिप्पला, शौनका, दामोदा, तोतायना, जाबाला, ब्रह्मपलाशा, कुनखी, देवदर्शी, चारणविद्या चेति। अत्र नामसु महद्वैभिन्न्यं दरीदृश्यते ग्रन्थान्तरेषु। एतासु नवसु शौनकशाखा पैप्पलादशाखा चेति द्वे सम्प्रत्युपलभ्येते। तत्रापि शौनकिशाखा एवाध्ययनाध्यापनयोः समादृता अद्यत्वे। परमस्याः स्वशाखीयाध्येतारो नोपलभ्यन्ते, अन्यशाखीया एव तामधीत्य जीवयन्ति।

पैप्पलादशाखायाः पुस्तकमेकमेव काश्मीरेषु समुपलब्धमाचार्य-रघुवीरेण सम्पादितमध्ययनाध्यापनयोरदृष्टप्रचारश्च वर्तते। मूलग्रन्थस्य मध्ये त्रुटितत्वान्नैषा पैप्पलादशाखीया संहिता पूर्णा समधिगता। यद्यपि गोपथ-ब्राह्मणे पातञ्जलमहाभाष्ये च 'शन्नो देवीः' इतिमन्त्रेणाथर्ववेदस्य प्रारम्भो निर्दिष्टोऽस्ति। परं शौनकशाखा नानेन मन्त्रेण प्रारभ्यते, अपितु 'ये त्रिषप्ताः' इति मन्त्रेण प्रारभ्यते। ततश्च पैप्पलादशाखा शन्नो देवीरिति-मन्त्रेण प्रारब्धा पूर्वं बहुप्रचारा आसीदिति विचारकैरनुमीयते।

यद्धि द्रव्यमापणे न्यूनं लभ्यते, उपयोगित्वञ्च यस्य विशेषतो ज्ञायते, तस्य महत्त्वं सर्वमान्यं यथा भवति, तथैव सर्वोपयोगितया साधितस्याथर्ववेद-स्याध्ययनस्याध्येतॄणाञ्चाल्पत्वादपि श्रैष्ठ्यमपरिहार्यं तिष्ठति। तस्मात् सर्वतोभावेन महत्त्वमाधत्तेऽथर्ववेदः।

---

१. अ० १०।७।२०

## वेदाङ्गानि

वेदा हि दुरूहाः। न शक्यस्तेषामर्थावगमः सामान्यतया कर्तुम्। अतस्तेषामर्थंप्रत्यायनायानेकेषां विषयाणां परिचयः अध्येतॄणां कृते आवश्यक एवेत्यनुभूतमाचार्यैः। तैश्च वेदार्थावगमाय ग्रन्था आरचिताः। एतानि वेदज्ञानोपकारकाणि ग्रन्थजातानि वेदाङ्गानीति व्यपदिश्यन्ते। अङ्ग्यन्ते ज्ञायन्ते अमीभिरित्यङ्गानीति व्युत्पत्त्या सारल्येन वस्तुस्वरूपज्ञानोपकारकाण्यङ्गानि भवन्तीति सुगमम्। तानि च वेदार्थावगमोपकारकाणि वेदाङ्गानि षट् सन्ति। **'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षडङ्गानि'**— इत्येवं चरणव्यूहे समुक्तम्। मुण्डकोपनिषदि इमान्यङ्गानि वेदवदपरविद्यात्वेन परिगणितानि[1]। वाङ्मयरूपस्य वेदपुरुषस्यैतानि षडङ्गानि चरणव्यूहे, पाणिनिना च शिक्षायामित्थं कल्पितानि[2]—

छन्दः पादौ तु वेदस्य हस्तः कल्पोऽथ पठ्यते।
ज्यौतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥ इति।

एवम्भूतानामङ्गानां परिचयः कोऽपि समासेन प्रस्तूयते—

### शिक्षा

शिक्षा हि स्वशाखीयवेदस्य स्वरव्यञ्जनादिवर्णसंहतेः उदात्तानुदात्तस्वरितादिस्वराणाञ्चोच्चारणशिक्षणं, मुखादिशरीरावयवस्थितेः प्रशिक्षणमध्ययनविधिं, गुरुशिष्यधर्मांश्चोपदिशति। अतएव शिक्ष्यन्ते विद्यात्मकतयोपादीयन्ते स्वशाखीयाः वर्णोच्चारणादिधर्मा यत्रेति निर्वचनं शिक्षापदस्य सङ्गच्छते। अतएव शिक्षाङ्गस्य विषया उपदिष्टास्तैत्तिरीयोपनिषदि[3]—

वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तानः—इति।

शिक्षाङ्गान्तर्भूताः शिक्षाग्रन्थाः वेदभेदेन भिन्नाः। तत्र ऋग्वेदीया पाणिनीया शिक्षा, यजुर्वेदीया याज्ञवल्क्यशिक्षा, सामवेदीया नारदीयशिक्षा, अथर्ववेदीया च माण्डूकी शिक्षा विशेषतः प्रसिद्धाः। अन्या अपि शिक्षाः

---

१. मु० उ० १।१।५
२. पा० शि० ४१-४२
३. तै० उ० १।२

कात्यायनी, वासिष्ठी, पाराशरी, माण्डव्या, शौनकीया, वैयासिकी, माध्यन्दिनी, अमोघानन्दिनी, सम्प्रदायप्रबोधिनीत्यादिभिर्नानानामभिः प्रथिताः स्वीयं विशिष्ट गौरवं धारयन्ति।

केषाञ्चन मतेन शिक्षाङ्गान्तर्भूता एव प्रातिशाख्यग्रन्थाः, तेऽपि वेदभेदेन शाखाभेदेन वा भिन्नाः केचन समुपलभ्यन्ते। तेषु शौनककृतमृग्वेदीयं प्रातिशाख्यम्, कात्यायनकृतं वाजसनेयिप्रातिशाख्यम्, अज्ञातकर्तृकं तैत्तिरीयं प्रातिशाख्यम्, सामवेदीये वररुचि-शाकटायनप्रणीते पुष्पसूत्रऋक्तन्त्रे, अथर्ववेदीयं प्रातिशाख्यं, शौनकीया चतुरध्यायिका चेति ग्रन्थाः नाम्नैव निर्देष्टुं शक्यन्तेऽत्र विस्तरभिया।

**कल्पः**

कल्प्यते समर्थ्यते यागप्रयोगो यस्मिन् स कल्पः,[१] कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्[२],—इत्यादिना वेदोक्तानां यागादिकर्मणां तत्प्रयोगाणाञ्च सम्यगर्थापकमुपकल्पकं शास्त्रं कल्प इति ज्ञायते। हस्तादृते न खलु पुरुषः स्वीयक्रियानुष्ठाने समर्थो भवति, एवमेव कल्पस्य हस्तस्थानीयस्य विरहेण यज्ञार्थकस्य वेदस्य क्रियानुष्ठानं न सम्भवति। यागप्रयोगश्चात्र कल्पे न श्रौतयागमात्रपरः, अपितु पाकयज्ञ-सामयाचारिकक्रियादिपरोऽपि।

कल्पग्रन्थेषु श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्राणि, शुल्बसूत्राणि चान्तर्भवन्ति। श्रौतसूत्रेषु श्रुतिप्रतिपादितानां मन्त्रब्राह्मणात्मकवेदैकमात्र-वेद्यानां हविर्यज्ञसोमयज्ञकर्मणां प्रयोगोऽनुष्ठानसौकर्यक्रमेणोक्तः। गृह्यसूत्रेषु पाकयज्ञानां, संस्काराणामानुषङ्गिकाणाञ्च लौकिकानामुपकारिणां कर्मणामुपदेशः। धर्मसूत्रेषु सामयाचारिकाणां लोकधर्माणां निर्देशः। शुल्बसूत्रेषु च यागोपयोगिनां मानानामभिधानं साधनञ्च वर्तते।

तत्र ऋग्वेदीयानि आश्वलायन-शाङ्खायन-श्रौतगृह्यसूत्राणि चत्वारि, कौषीतकिगृह्यसूत्रं, विष्णुवसिष्ठधर्मशास्त्रे चेति पुस्तकानि। शुक्लयजुर्वेदीयानि कात्यायनश्रौत—पारस्करगृह्य-कात्यायनशुल्बसूत्राणि। कृष्णयजुर्वेदीयानि बोधायना-पस्तम्ब-सत्याषाढ-मानव-वैखानस-भारद्वाज-वाराह—श्रौतसूत्राणि, बोधायना-पस्तम्ब-सत्याषाढ-मानव-काठकगृह्यसूत्राणि, बोधायना-पस्तम्ब-सत्याषाढ—धर्मसूत्राणि, बोधायना-पस्तम्ब-मानवशुल्बसूत्राणि च सन्ति।

---

१. ऋ० भा० भू० पृ० ५० सायणोक्तिः

२. ऋ० प्रा० वर्गद्वयवृत्तौ विष्णुमित्रः पृ० १३

सामवेदीयानि लाट्यायन-द्राह्यायण-जैमिनीय-मशकश्रौतसूत्राणि, गोभिल-खादिर-जैमिनि-गृह्यसूत्राणि, गौतमधर्मसूत्रञ्चेति पुस्तकानि। अथर्ववेदीये वैतानश्रौत-कौशिकगृह्यसूत्रे एवं समुपलभ्येते।

## व्याकरणम्

व्याकरणाङ्गेन साधुतया प्रसिद्धस्य शब्दस्य प्रकृतिप्रत्ययविश्लेषण-मुखेन शब्दार्थस्वरूपसम्बन्धिनां विशेषधर्माणां लोपागमवर्णविकारादीनां शास्त्रीयाः विशिष्टा आकृतयः प्रतिपाद्यन्ते। अतएव—व्याक्रियन्ते व्युत्पाद्यन्ते सधर्माः शब्दावयवा यत्र तद् व्याकरणमिति निर्वचनं समुपदिशन्ति। रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति व्याकरणप्रयोजनानि मुख्यानि, गौणानि चान्यानि पतञ्जलिनापदिष्टानि[1]। व्याकरणानि नवसङ्ख्याकानि प्राचीनाचार्यैरेवं निर्दिष्टानि—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥ इति।

तत्र चाधुना पाणिनीयं व्याकरणं कात्यायनीयवार्त्तिक-पातञ्जलमहाभाष्ययुतमेव लौकिकवैदिकोभयविधशब्दसाधकतया लोकप्रथितम्।

## निरुक्तम्

निरुक्ताङ्गं द्विस्वरूपमुपलभ्यते—निघण्टुशब्दाभिधेयमेकम्, द्वितीयञ्च निर्वचनात्मकम्। अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तमिति प्रथमस्य लक्षणम्[2], निःशेषेण पदानामर्था उच्यन्ते यत्र तन्निरुक्तमिति च द्वितीयस्य। एतामेव च निरुक्ताङ्गसम्बन्धिनीं विवेचनां साम्प्रतिकयुगे भाषाविज्ञानपदेन जनाः व्यवहरन्ति। निरुक्तस्य विषयक्षेत्रं पद्येनानेन प्रतिपादितम्—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥ इति।

इदञ्च निरुक्ताङ्गं चतुर्दशभिऋर्षिभिर्विवेचितमिति बहुशः श्रूयमाणमपि इदङ्काले यास्ककृतनिरुक्तान्नाधिकमुपलभ्यते, अत एव तत् सर्ववेदसमादृतम्। वाररुचनिरुक्तमपि लघुपुस्तकमेकं मुद्रितमुपादेयञ्च।

---

१. म० भा० पस्पशाह्निके

२. ऋ० भा० भू० पृ० ५५ सायणोक्तिः

### छन्दः

वैदिकमन्त्राः विभिन्नेषु छन्दस्सु निबद्धाः। वेदमन्त्राणां साधुतयोच्चारणाय च्छन्दसां ज्ञानमपरिहार्यम्। तदुक्तं कात्यायनेनापि[1]—यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वार्च्छति गर्त्तं वा पात्यते प्रमीयते वा पापीयान् भवति, इति। तदिदं पादस्थानीयं छन्दोऽङ्गं क्रौष्टुक्यादिभिराचार्यैरुक्तमपि श्रूयते। परमद्यत्वे पिङ्गलकृतं कात्यायनकृतञ्च छन्दःसूत्रद्वयं प्राप्यते। शौनकेन ऋक्प्रातिशाख्येऽपि १६-१८ पटलेषु च्छन्दांसि बहुशो निर्दिष्टानि। सामतन्त्रादिग्रन्थेष्वपि च्छन्दसां विषयो वर्तते।

### ज्यौतिषम्

ज्यौतिषमिति षष्ठमङ्गं चक्षुःस्थानीयं कालविज्ञापकं शास्त्रम्। प्रातरुदिते जुहोति, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, वसन्ते वसन्ते ज्योतिषा यजेत, मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते—इत्यादिवचनप्रतिपादितानि यागादिकर्माणि मुहूर्त्तं शोधयित्वा क्रियमाणान्येव फलाय कल्पन्ते, नान्यथा। तन्मुहूर्त्तकालज्ञानञ्च ज्यौतिषाङ्गं साधयति। तदभिहितमपि—

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेदान्॥ इति।

तस्यास्य वेदाङ्गज्यौतिषस्य ग्रन्थत्रयमेव सम्प्रति सम्प्राप्यते-१—आर्चज्यौतिषं षट्त्रिंशत्पद्यात्मकम्, २—याजुषज्यौतिषमष्टचत्वारिंशत्पद्यात्मकम्, ३—आथर्वणज्यौतिषं द्विषष्ट्युत्तरशतपद्यात्मकं च।

एतावत्प्रबन्धे चेदं संस्थापितं भवति यच्छिक्षाङ्गसाहाय्येनोच्चारितः कल्पाङ्गेनोपक्लृप्तक्रियाकलापो व्याकरणेन संसाधितशब्दो निरुक्तेनोक्तार्थश्छन्दोभिराच्छादितमर्यादो ज्यौतिषेण सञ्जातसमयसन्धानः सर्वाङ्गो मन्त्रब्राह्मणात्मकश्चतुष्कलेवरो भगवान् वेद एव मानवानामैहिकामुष्मिकफलप्रदाने सुतरां समर्थः।

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः।
मिश्रस्य श्रीकिशोरस्य वाङ्मात्राभिः प्रसीदताम्॥

●

---

[1] [illegible]

श्रीकात्यायनीयः

# चरणव्यूहः

श्रीकिशोरमिश्र-

विरचितया

पीयूषकणिकाव्याख्यया संवलितः

अथ कात्यायनकृतं

# चरणव्यूहपरिशिष्टम्

## ऋग्वेदखण्डः

अथातश्चरणव्यूहं व्याख्यास्यामस्तत्र यदुपगतं चातुर्वेद्यं चत्वारो वेदा विज्ञाता भवन्ति ।

---

अथ कातीयचरणव्यूहस्य

## पीयूषकणिकाव्याख्या

गणपतिमीशं करुणावरुणालयमन्तरायपूगहरम् ।
श्रीश्यामं भगवन्तं भवभयखेदच्छिदं वन्दे ॥ १ ॥
यस्माच्चातुर्वर्ण्यं चत्वारश्चाश्रमास्त्रयो लोकाः ।
सिद्ध्यन्ति यज्ञसंस्थाः कालत्रितयं नमोऽस्तु वेदाय ॥ २ ॥
यद्विज्ञानमवाप्यैतत्सर्वं प्रवर्त्ततेऽस्माकम् ।
विद्वत्तिलकं नमामि वैदिकधुर्यं श्रीगुरुं पितरम् ॥ ३ ॥

अथेति प्रारम्भार्थको मङ्गलात्मकनिपातः, आनन्तर्यार्थो वा । अतश्शब्दश्च हेत्वर्थः । यतः साङ्गो वेदराशिः समधीतः, अतस्तदनन्तरं यदावश्यकं तत्सम्बन्धि ज्ञानं तन्निरूपणायेदं परिशिष्टं चरणव्यूहाख्यं प्रारभ्यत इति केचित् । एकविभावः । सकलवेदराशेश्चतुर्थो भागश्चरणशब्देनोच्यत इति याज्ञिकपीयूषपादाः । तस्य धव्रतेनाध्येतुं शक्यो वेदशाखासमूहश्चरणमिति इति मेदिनी । व्यूहः समूहः । "व्यूहः स्याद् बलविन्यासे निर्माणे वृन्दतर्कयोः" इति मेदिनी । एकत्र समुदायेनोपदेशग्रन्थ इत्यभिधानसङ्गतिः । तच्चरणव्यूहाख्यं परिशिष्टं व्याख्यास्यामः वक्ष्यामः ।

तत्र चरणव्यूहे यदुपगतं प्राप्तम् । उक्तमिति पाठभेदे निरूपितमित्यर्थः । तदेव चातुर्वेद्यं, चतुर्णां वेदानां समाहारस्तेन चत्वारोऽपि वेदाः चरणशाखादिवाङ्मयरूपेण विज्ञाताः परिचिता भवन्तीति ग्रन्थप्रयोजनोपन्यासः ।

तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति ।

तत्र ऋग्वेदस्याष्टौ स्थानानि भवन्ति, चर्चा श्रावकश्चर्चकः श्रवणीयपारः क्रमपारः क्रमपदः क्रमजटः क्रमदण्डश्चेति ।

चतुष्पारायणमेतेषाम् ।

---

तत्र चातुर्वेद्ये प्राथम्येन वेदचतुष्टयस्य नामान्युच्यन्ते। ऋग्वेदः—"नियताक्षरपादावसाना ऋच" इत्युक्तलक्षणाभिरृग्भिर्बहुलः। यजुर्वेदः–"अनियताक्षरपादावसानानि यजूंषि" इत्युक्तलक्षणैर्यजुर्मन्त्रैर्बहुलः। सामवेदः–"गीतिविशिष्टा ऋच एव सामानि" इत्युक्तलक्षणैः सामभिर्गानयोनि-भूतर्ग् रूपैर्बहुलः । अथर्ववेदः– पूर्वोक्ततत्च्छैलीत्रितयानतिरिक्तैरथर्वाख्यैः ( अथर्वदृष्टैरिति केचित् ) शान्तिकपौष्टिकाभिचारिकादिमन्त्रैर्बहुलश्चेति ।

तत्र ऋग्वेदस्य, सर्ववेदोपलक्षकोऽत्र ऋग्वेदस्तस्य चर्चेत्यादीनि मूल एवानुपदमुक्तान्यष्टौ स्थानान्यध्ययनालम्बभूतानि प्रतिष्ठानानि भवन्ति। चर्चा अध्ययनम्, चर्चाध्ययने चुरादय इत्युणादिसूत्रपाठात्। शब्दात्मकवेदस्य गुरुमुखात् यदपूर्वश्रवणं कृत्वाध्येतुः ताल्वोष्ठव्यापारेणापूर्वमुच्चारणम्। श्रावकः वेदाध्यापयिता गुरुः। चर्चकोऽध्येता शिष्यः। श्रवणीयपारः श्रोतुमर्हः श्रवणीयो वेदस्तस्यान्तिमो देशः पारः, तत्समाप्तिरित्यर्थः । प्रारम्भतः समाप्तिपर्यन्तं यथाशक्ति प्रत्यहं स्वाध्यायः। क्रमपारः, क्रमः संहितेति भावः। तस्याः पारो नामादितोऽन्तपठनेन प्राप्तोऽन्तिमः प्रदेशः। सा च संहिता द्विविधा-प्रथमा केवलसंहिता प्रकृतिसंहितेति व्यवह्रियमाणा, अपरा चार्षी योगरूढा वेति। अत्रोभयविधा विवक्षिता। क्रमपदः पदपाठः। तदिदं प्रकृति-पाठद्वयम्। क्रमजटः क्रमदण्डश्चेतिविकृतिपाठद्वयम्। जटाद्यष्टविकृतिषु जटादण्डयोरेव प्राधान्यम्। यतो हि शिखाघनविकृत्यौ जटामनुसरतः। शिष्टाश्च माला, रेखा, ध्वजो रथश्चेति चतस्रो विकृतयो दण्डमनुसरन्ति। ताश्च सर्वा अपि क्रमप्रकृतिका भवन्तीत्युभयत्र क्रमशब्दः। 'प्राधान्येन व्यपदेशा भवन्ति', 'वैशेष्यात्तद्वादस्तद्वाद' इत्यादिकन्यायेन विकृतिद्वयस्य व्यपदेशोऽयम्। चतुष्पारायणं चतुः प्रकारकं पारायणमेतेषां चतुर्णां वेदानामृग्वेदीयचरणानां वा भवतीति शेषः। चतुर्णां वेदानां प्रकृतिविकृति-पाठानेवमभियुक्ता अभिप्रयन्ति—

यजुर्वेदो घनान्तः स्यादृग्वेदोऽपि घनान्तकः ।
सामवेदः पदान्तः स्यादथर्वः संहितान्तकः ॥ इति ।

शाखाः पञ्चविधा भवन्ति शाकला बाष्कला आश्वलायनाः शाङ्खायना माण्डूकायनाश्चेति, तेषामध्ययनम्—

अध्यायाश्च चतुष्षष्टिर्मण्डलानि दशैव तु ।
एकर्चं एकवर्गश्च एकश्च नवर्चस्तथा ॥
द्वौ वर्गौ तु द्व्यृचौ ज्ञेयौ त्र्यूनं तृचशतं स्मृतम् ।
चतुर्ऋचं समाख्यातं षट्सप्तत्युत्तरं शतम् ॥
पञ्चर्चं द्वादशशतान्यष्टाविंशोत्तराणि च ।
शतत्रयं षड्ऋचञ्च सप्तपञ्चाशदुत्तरम् ॥
सप्तर्चमेकोनत्रिंशदुत्तरं शतमेककम् ।
अष्टर्चं पञ्चपञ्चाशद्वर्गाः स्युर्नाधिकोत्तराः ॥
वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे ।
ऋचां दश सहस्राणि ऋचां पञ्चशतानि च ।
ऋचामशीतिपादश्चैतत्पारायणमुच्यते ॥

इति कात्यायनीये चरणव्यूहपरिशिष्टे प्रथमः ऋग्वेदखण्डः

---

तेषां शाकल-बाष्कला-श्वलायन-शांखायन-माण्डूकायनचरणानामृग्वेदा-न्तर्गतानाम् अध्ययनं भवति ।

ऋग्वेदस्याध्यायसूक्तादीनां संख्योपदिश्यते । अधीयत इत्यध्यायो वेदः । तस्य येऽवान्तरभूताः स्वल्पकालेनाधीयमाना वेदविभागास्तेऽप्यध्यायशब्देन व्यवह्रियन्ते । ते च चतुःषष्टिसंख्याकाः सन्ति । अनेकसूक्तानां समुदायो यत्र तानि मण्डलानि दशसंख्याकानि ऋग्वेदे । 'एकर्चं' इत्यारभ्य 'वर्गाः स्युर्नाधिकोत्तराः' इत्यन्तमृक्परिगणनं वर्गपरिगणनञ्च । तथा हि संख्यानम्—एकर्चः १, नवर्चः १, द्व्यृचौ २, तृचवर्गाः ९७, चतुर्ऋचवर्गाः १७६, पञ्चर्चाः १२२८, षडृचाः ३५७, सप्तर्चाः १२९, अष्टर्चाः ५५ । एतच्च कात्यायनीय-परिगणनं शाङ्खायनपाठाभिप्रायेण प्रतिभाति । शौनकीयचरणव्यूहोक्तपाठा-नुसारं परिगणनं शाकलपाठमाश्रित्येति संभावनम् । तत्परिगणनं तु—सूक्तानि १०२८, वर्गाः १०२४, ऋचः १०५५२, इत्येतद् बालखिल्यसूक्तसहितम् ।

बालखिल्यैर्विना तु—२००६ वर्गाः, १०५८०$\frac{1}{4}$ ऋचश्च विज्ञेयाः । एवमृग्वेदे पारायणेऽध्ययनमुच्यते ।

इत्यृग्वेदखण्डविवृतिः ।

## यजुर्वेदखण्डः

यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। तत्र चरकानां द्वादश भेदा भवन्ति। चरका आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया वारायणीया वार्तान्तवीयाः श्वेताश्वतरा औपमन्यवाः पान्ताण्डनीया मैत्रायणीयाश्चेति। तत्र मैत्रायणीयानां सप्त भेदा भवन्ति, मानवा वाराहा दुन्दुभाश्छागलेयाः श्यामाः श्यामायनीया हारिद्रवीयाश्चेति। तत्र हारिद्रवीयानां पञ्च भेदा भवन्ति, तत्र हारिद्रवीयाऽऽसुरी गार्गी शार्कराक्ष्याग्नावासवी चेति पञ्चेति हारिद्रवीयसङ्ग्रहः।

तेषामध्ययनमष्टादशयजुःसहस्राण्यधीत्य शाखापारो भवति, तान्येव द्विगुणान्यधीत्य पदपारो भवति, तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति। षडङ्गान्यधीत्य षडङ्गविद् भवति।

---

यजुर्वेदस्य शुक्लकृष्णोभयात्मकस्य मध्येऽपरस्य कृष्णस्य षडशीतिः ८६ संख्याकाः शाखाभेदाः सन्ति। शुक्लयजुर्भेदानामुपरिष्टाद् वक्ष्यमाणत्वादत्रानुपद षडशीतिरित्यवान्तरभेदकथनोपक्रमात् तथा प्रतिपत्तेः। तत्र उक्तषडशीतिशाखानां मध्ये चरकाख्यमुख्यचरणस्य द्वादशभेदाः चरका आह्वरका इत्यादयो मैत्रायणीयान्ताः सन्ति। तत्रापि मैत्रायणीयानां मानवा वाराहा इत्यादयो हारिद्रवीयान्ताः सप्त भेदाः। हारिद्रवीयानामपि पञ्चभेदा उक्ताः।

तेषां द्वादशानां चरकाणां, सप्तानां मैत्रायाणीयानां, पञ्चानां हारिद्रवीयाणां च अध्ययनमष्टादशसहस्रसंख्याकयजुर्गणरूपम्। यजुःसंख्येयं मन्त्रब्राह्मणे सङ्कलीकृत्य मन्तव्या। एतावन्तञ्च यजुर्गणमधीयानः समग्रशाखाध्यायी शाखापार इति कथ्यते। उपर्युक्तसंख्याकानि यजूंष्येव द्विगुणानि, द्वितीयः पदविभागलक्षणो गुणो येषां तादृशानि सम्पादितानि विधायाधीयानः पदपारो भवति। पुनस्तृतीयो गुणः क्रमपाठलक्षणो येषां तादृशानि तान्येव यजूंषि सम्पादितानि कृत्वाधीयानः क्रमपारो भवति। मन्त्रब्राह्मणयोरुभयोरपि वेदभागयोः संहिता-पद-क्रमरूपं त्रिविधमध्ययनं कृष्णयजुर्वेदे भवति, तत्र मन्त्रब्राह्मणयोः व्यामिश्रितत्वदर्शनात्।

तत्र षडङ्गानि भवन्ति—शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ।

छन्दः पादौ तु वेदस्य हस्तः कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

तथा प्रतिपदमनुपदं छन्दोभाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि ।

---

अङ्गमित्युपाङ्गानामप्युपलक्षकम् । तेनाङ्गानामनन्तरमुपाङ्गानां निरूपणं सङ्गच्छते। षडङ्गानि उपाङ्गानि च वेदार्थावगमोपकारकाणि वेदाध्ययनेन साकमधीत्य षडङ्गविद् भवतीति साङ्गोपाङ्गवेदाध्ययनप्रशंसा । तानि च षडङ्गानि, शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्योतिषाख्यानि भवन्ति । तानि च वेदपुरुषस्याङ्गिनः किंरूपाण्यङ्गानीति तत्तदवयवकल्पनद्वारा फलनिरूपणं छन्दः पादाविति कारिकाद्वयाशयः ।

अथोपाङ्गनिरूपणम् । प्रतिपदं प्रतिचरणं भिद्यमानमुपाङ्गशास्त्रम् । अनुपदम्, इदमुपाङ्गं लुप्तप्रायम् । शौनकीयचरणव्यूहस्य महिदासव्याख्यायां, कातीयस्य विषमपदाङ्कक्रियायाञ्च 'अनुपदस्य' नोपाङ्गत्वेन परिगणनं कृतं तच्चासमञ्जसम् । उपाङ्गत्वविरहे तदुक्तेरसङ्गतार्थत्वात्, अनुपदसूत्रोपलब्धेश्च । तत्रैव व्याख्याद्वये छन्दः भाषा चेति द्वयं पृथक्पृथगुपाङ्गत्वेनोक्तं तदप्यसङ्गतम् । छन्दोभाषेति प्रातिशाख्यापरपर्यायमुपाङ्गशास्त्रं प्रसिद्धम् । व्याख्याद्वये छन्दसः पृथक्परिगणने अङ्गेष्वपि छन्दसः संख्यानात् पुनरुक्तिवैयर्थ्यापत्तिश्च । भाषेत्युपाङ्गस्य च कुत्रापि नोल्लेखः । प्राचीनाचार्यैरपि—प्रतिपदश्चानुपदं छन्दोभाषासमन्वितम् । मीमांसान्यायतर्काश्च उपाङ्गानि विदुर्बुधाः ॥ ( तै० प्रा० ५२९ पृ० ) इत्यादिना छन्दोभाषाख्योपाङ्गस्य पृथगुपादानम् । अनेन तैत्तिरीयप्रातिशाख्ये ( २५।५ ) माहिषेयभाष्यमपि संवदति । धर्मो धर्मशास्त्रम् । एतच्च क्वचन नोपाङ्गेषूपदिष्टम् । मीमांसा नाम पूर्वोत्तरकर्मब्रह्ममीमांसारूपं जैमिनिव्यासेत्याचार्यद्वयप्रणीतं शास्त्रम् । न्यायो गौतमीया षोडशपदार्थी । तर्को वैशेषिकी सप्तपदार्थी कणादप्रणीता चेति षडेवोपाङ्गानि भवन्ति ।

तथाऽत्र तैत्तिरीयकानां द्विभेदा भवन्ति-औखेयाः खाण्डिकेयाश्चेति। तत्र खाण्डिकेयानां पञ्च भेदा भवन्ति—भारद्वाजी आपस्तम्बी बौधायनी सत्याषाढी शाट्यायनी चेति। तेषामध्ययनम्।

काण्डास्तु सप्त विज्ञेयाः प्रश्नाश्चाधिकयकाश्चतुः।
चत्वारिंशत्तु विज्ञेया अनुवाकाः शतानि षट्॥
एकपञ्चाशदधिकाः संख्याः पञ्चाशदुच्यते।
द्विसहस्रञ्चैकशतमष्टानवति चाधिका॥
लक्षैकं तु द्विनवतिसहस्राणि प्रकीर्तितम्।
पदानि नवतिश्चैव तथैवाक्षरमुच्यते॥
लक्षद्वयं त्रिपञ्चाशत् सहस्राणि शताष्टकम्।
अष्टषष्ट्यधिकञ्चैव यजुर्वेदप्रमाणकम्॥
शाखावाक्यान्ययुतानि सहस्राणि नवानि च।
चतुः शतान्यशीतिश्च अष्टौ वाक्यानि गण्यते॥

इति ब्राह्मणम्। एवमेवामध्ययनं प्रवचनीयं सौत्रिकञ्चेति।

तत्र कठानां तूपगाश्चतुश्चत्वारिंशत्।

---

तथा तद्वच्चात्र कृष्णयजुर्वेदे षडशीतिशाखानां मध्ये तैत्तिरीयकाणाम् औखेयाः खाण्डिकेयाश्चेति द्विप्रकारका भेदेनाध्यायिनो भवन्ति। खाण्डिकेयानामपि तत्र भारद्वाजादयो पञ्च भेदाः। सत्याषाढी हिरण्यकेशीत्यनर्थान्तरम्। तेषां सकलानां तैत्तिरीयाणामध्ययनं, तदर्थं च संख्यादिकमुच्यते-सप्तकाण्डात्मकमिदम्। प्रश्नाश्चतुश्चत्वारिंशत्। एकपञ्चाशदधिकं षट्शतमनुवाकाः। द्विसहस्रैकशताष्टानवतिः पञ्चाश्यः। लक्षैकद्विनवतिसहस्रनवतिसंख्याकानि पदानि। लक्षद्वयत्रिपञ्चाशत्सहस्राष्टशतान्यष्टषष्ट्यधिकानि चाक्षराणि।

अथ ब्राह्मणवाक्यानां सङ्ख्या – तानि तु एकोनविंशतिसहस्रचतुःशताष्टाशीतिसङ्ख्यापरिमितानि एवमुक्तप्रकारेणैषां तैत्तिरीयाणां प्रवचनीयं वेदसम्बन्ध्यध्ययनम्। पुनश्च सौत्रिकमध्ययनमुच्यते। तेषु श्रौतगृह्यधर्मप्रतिपादकानि सूत्राणि, क्वचित् तत्परिशिष्टानि च। तत्र कठानामुपगा उपग्रन्थाश्चतुश्चत्वारिंशत्संख्याकाः।

मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।
यजुर्वेदः स विज्ञेय अन्ये शाखान्तराः स्मृताः ॥ इति ।

तत्र वाजसनेयिनां पञ्चदश भेदा भवन्ति—जाबाला बौधेयाः काण्वा माध्यन्दिनाः शापेयास्तापायनीयाः कपोलाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशरा वैनधेया गालवाः कात्यायना बैजवापाश्चेति । तेषामध्ययनम्—

द्विसहस्रः शतन्यूनो मन्त्रे वाजसनेयके ।
ऋग्गणः परिसंख्यातः शेषमन्यद् यजुः स्मृतम् ॥

अष्टौ सहस्राणि शतानि चाष्टावशीतिरक्षराण्यृग्भिर्विभक्तं केवलं सखिलं सशुक्रियं च यत् ।

---

कृष्णयजुर्वेदस्वरूपभेदो निरूप्यते—मन्त्रब्राह्मणव्यामिश्रोऽयं तैत्तिरीयः कृष्णयजुर्वेदः । त्रिगुणं संहितापदक्रमेतित्रिविधं यथा स्यात् तथा यस्यां यस्यामपि शाखायां पठ्यते स यजुर्वेदोऽर्थात् कृष्णयजुर्वेदो विज्ञेयः । अन्ये कृष्णभिन्नाः शाखान्तराः शुक्लजुर्वेदीयाः शाखाः ऋषिभिः स्मृताः । 'विज्ञेय अन्ये' इत्यत्रार्षः सन्ध्यभावो वक्तव्यः । शेषाः इति पाठान्तरे तु सर्वं समञ्जसम् ।

तत्र यजुर्वेदस्य शुक्ले भेदे वाजसनेयिनां वाजसनेयेन याज्ञवल्क्येन प्रवर्त्तितानां शाखानां पञ्चदश भेदाः जावाला इत्यादयो वैजवापान्ताः परिगणिताः । शुक्लत्वनिमित्तं वाजसनेयशब्दप्रवृत्ति च बहुधा विद्वांसो निर्द्धारयन्ति । सोऽयं विषयस्तत्र तत्र द्रष्टव्यः । तेषां पञ्चदशानां वाजसनेयिनामध्ययनमाह—

वाजसनेयके शुक्लयजुःपञ्चदशशाखाकदम्बके मन्त्रे मन्त्रगणे, नियताक्षरपादावसानाश्छन्दोबद्धा मन्त्रा ऋचस्तासामृचां गणः समूहः शतन्यूनद्विसहस्रसङ्ख्यः परिसङ्ख्यातः । यदन्यच्छेषभूतमृग्गणव्यतिरिक्तं तदनियताक्षरपादावसानं गद्यरूपं यजुर्मन्त्रजातं स्मृतम् । तानि च यजूंषि तावदष्टौ सहस्राण्यष्टौ शतान्यशीतिसंख्याकान्यक्षराणीति परिसङ्ख्यातानि । ऋग्भिर्विभक्तमृग्भ्यो विभक्तं यजुर्जातमित्यर्थः । ऋचोऽप्यत्र यजुर्धर्माक्रान्तत्वाद् यजुःस्वरूपा एव । एवञ्च सकलमपि परिगणितं मन्त्रजातम् ।

सकलं परिसंख्यातं ब्राह्मणं च चतुर्गुणम् ।

तत्र माध्यन्दिनीयपरिमाणं तु—

कण्डिकास्तु परिज्ञेयाः शतान्येकोनविंशतिः ।
पञ्चसप्तत्यधिकानि वेदे माध्यन्दिनीयके ॥
ब्राह्मणं तु शतपथं काण्डानि च चतुर्दश ।
मन्त्रः पदः क्रमश्चैव चतुर्थं स्याज्जटा तथा ॥
क्रममाला शिखा रेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥

---

केवलम्—इषेत्वेत्यादि शादन्दद्भिरित्यन्तं पञ्चत्रिंशदध्यायसमाम्नातं केवलसंज्ञकम् । सखिलं—अग्निश्चेत्यारभ्य अपेत इत्यन्ता पञ्चाध्यायी पञ्चत्रिंशदनुवाकात्मिका खिलसंज्ञिका, तया सहितम् । सशुक्रियम्—उक्तावशिष्टम् ऋचं वाचमित्यारभ्य ईशावास्यमित्यन्ता पञ्चाध्यायी एकादशानुवाकात्मिका शुक्रियसंज्ञिका, तया सहितम् । इत्थं कृत्स्नं पञ्चदशविधं शुक्लयजुर्जातं परिसंख्यातमित्यर्थः । ब्राह्मणं शुक्लयजुर्वेदीयं शतपथाख्यं तूक्तयजुर्गणसंख्यापेक्षया चतुर्गुणमस्ति ।

तत्र पञ्चदशशाखामध्ये सर्वाधिकप्रसिद्धत्वात् माध्यन्दिनीयशाखाया मन्त्रपरिमाणमाह - कण्डिकारूपा मन्त्राः पञ्चसप्तत्यधिकैकोनविंशतिशतपरिमिताः । कण्डिकास्वरूपमाहुर्याज्ञिकपीयूषाः—स्मार्ते प्रयोगे स्युर्मन्त्राः कण्डिकान्तास्तु सर्वथा । एकस्यां कण्डिकायां स्युर्बहवोऽपि यथावचः । लोके च मन्त्रशब्दोऽयं कण्डिकासु प्रयुज्यते ॥ इति । शतपथब्राह्मणं तु चतुर्दशकाण्डात्मकम् । एवं माध्यन्दिनीयानां विशेषमुक्त्वा पुनः सर्वसाधारणमध्ययनं निरूपयति—

मन्त्रः संहितापाठः । पदः पदपाठः, पाठविशेषणधियाऽत्र पुल्लिङ्गप्रयोगः । क्रमः क्रमपाठः । इमे त्रयः प्रकृतिपाठाः । जटा, माला, शिखा, रेखा, ध्वजः, दण्डः, रथः, घनः, इत्येवमष्टौ विकृतिपाठाः । अतश्च त्रिप्रकारकं प्रकृत्यध्ययनं चतुर्थञ्च विकृतिरूपं जटादीनामध्ययनम् । क्रमस्य प्रकृतित्वं प्रसाधयति—ताश्च सर्वा विकृतयः क्रमपूर्वाः क्रमप्रकृतिका अध्येतव्या भवन्तीति मनीषिभिर्व्याडिप्रभृतिभिरुक्तम् ।

पारस्करं गृह्यसूत्रं कल्पः कात्यायनीयकः ।
षडङ्गोपाङ्गयुग्वेदो यथोक्तफलदो भवेत् ।।

तत्र परिशिष्टानि भवन्ति—यूपलक्षणं, छागलक्षणं, प्रतिज्ञाऽनुवाकसंख्या, चरणव्यूहः, श्राद्धकल्पः, शुल्बसूत्रयजुषं, पार्षदमिष्टकापूरणं, प्रवराध्यायो, मूल्याध्याय, उञ्छशास्त्रं, निगमा, यज्ञपार्श्वे, हौत्रिकं, प्रसवोत्थानं, कूर्मलक्षणमित्यष्टादश परिशिष्टानि भवन्ति ।

अनुक्रमः पदज्योतिर्यजुषां च विधानकम् ।
कर्मप्रदीपिका चैव स्वराणां व्यञ्जनं तथा ।।
मन्त्रभ्रान्तिहरश्चैव शिक्षाणां पञ्चकं तथा ।

---

परशाखायां सूत्रप्रणयनेन पारक्यं सूत्रजातं करोतीति व्युत्पत्त्या पारस्कर इति कात्यायनस्यैवापरं नामधेयम् । पारस्करो देशस्तत्र स्थितत्या कात्यायनोऽपि पारस्कर उच्यते इति केचन । एतत्प्रणीतं सूत्रं गृह्यं गृह्याग्नि-साध्यकर्मप्रतिपादकं वर्तते । कात्यायनस्यैव नाम्ना प्रसिद्धस्तत्प्रणीतः कल्पः श्रौताग्निसाध्यकर्मप्रतिपादकसूत्रग्रन्थ । षडङ्गान्युपाङ्गानि च पूर्वं निरूपितान्येव । तेषां चतुर्वेदीयसर्वशाखासाधारण्येन श्रुतिः तैर्युक्तो वेदोऽधीतो यथोक्तफलदाने समर्थो भवेत् ।

तत्र शुक्लयजुर्वेदे यूपलक्षणादीनि कूर्मलक्षणान्तान्यष्टादशपरिशिष्टानि भवन्ति । परिशिष्टानां विषयस्वरूपं त्वाश्वलायनगृह्यपरिशिष्टप्रतिज्ञायां लक्षितम्—गृह्येऽपि यानि नोक्तानि क्वचिद्वैतानिकेऽपि वा । विधेरलोपनार्थाय तानि वक्ष्याम्यत परम् ।। इति श्रौतगृह्यकल्पयोर्यद् यदुक्तं ततो यदवशिष्टान्युपबृंहणानि विध्युपयोगीनि तानि परिशिष्टशब्दवाच्यानि ज्ञेयानि । अत्र परिशिष्टनामसु निगमा इति बहुवचनं तद्गतपदार्थबाहुल्याभिप्रायेण मन्तव्यम् । यज्ञपार्श्व इति द्विवचनं तु पूर्वोत्तरभागद्वयविवक्षयेति समन्वयः ।

अथ परिशिष्टातिरिक्ता अन्येऽध्ययनोपकारकग्रन्थाः केचन निर्दिश्यन्ते—अनुक्रमः सर्वानुक्रमः । यजुर्विधान सप्ताध्यायम् । कर्मप्रदीपिका छन्दोगपरि-शिष्टम् । स्वराणां व्यञ्जन स्वराङ्कुशादि । मन्त्रभ्रान्तिहरः सूत्रमन्त्रप्रकाशिका ।

शेषमध्ययनमुच्छिन्नं कल्पसूत्रेषु पठ्यते ॥
अङ्गब्राह्मणकल्पानां साम्नां च यजुषामृचाम् ।
षण्णां यः प्रविभागज्ञः सोऽध्वर्युः कृत्स्न उच्यते ॥

इति कात्यायनीये चरणव्यूहपरिशिष्टे द्वितीयो यजुर्वेदखण्डः

## सामवेदखण्डः

सामवेदः किल सहस्रभेद आसीत्, तेष्वनध्यायेष्वधीयानाः शक्रेणाभिहताः, शेषान् प्रवक्ष्यामि । तत्र राणायणीयानां सप्त भेदा भवन्ति—राणायणीया शाट्मुग्र्याः कालोपा महाकालोपा लाङ्गलायनाः शार्दूलाः कौथुमाश्चेति । तत्र कौथुमानां षड् भेदा

---

शिक्षाणां पञ्चकम् याज्ञवल्क्यीया, अमोघानन्दिनी, कात्यायनी, माध्यन्दिनी, मनःस्वारशिक्षा च । इमे ग्रन्था अपि परिशिष्टवदुपबृंहणार्था एव । शिष्टमध्ययनमुच्छिन्नप्रायम् । तथा च कल्पोक्तानां विनियुक्तमन्त्राणां रूपेण पठ्यमानं दृश्यत एव ।

अथाध्वर्युलक्षणमुच्यते—अङ्गब्राह्मणादीनां, कल्पादि सूत्राणामृग्यजुःसाममन्त्राणाञ्च परस्परं प्रकृष्टं विभागं यो जानाति स कृत्स्नः सम्पूर्णः पारङ्गत इति भावः, अध्वर्युः समग्रमध्वरं युनक्तीत्यन्वर्थसञ्ज्ञो भवति। अध्वर्योर्यजुर्वेदित्वादत्र खण्डे तल्लक्षणमिति ।

इति यजुर्वेदखण्डविवृतिः ।

सामवेदः सहस्रं भेदाः शाखा यस्य तादृश आसीत् । तदिदं "सहस्रवर्त्मा सामवेद." इति महाभाष्योक्त्या, "सहस्रं शाखा ह्यर्थतो वेद शबर." इति प्रसिद्धया च संवदति । केचन सामगाने पद्धतयः सहस्रसंख्या आसन्निति प्रतिपादयन्ति । तत्र च सामसहस्रशाखानां नामानुपलम्भं, राणायनादिजैमिन्यन्तानां त्रयोदशानामेव सामश्रुतर्षीणां सामतर्पणे परिगणनञ्च प्रमाणत्वेनोपस्थापयन्ति । पुराणाख्याने च नादरं दर्शयन्तीति न युक्तम् । ऋग्यजुर्वेदखण्डयोर्भेदपदेन शाखानामुपदर्शितत्वादत्रापि सहस्रशाखाः भेदपदाभिधेयाः । अतथात्वे शबरप्रसिद्धिगतशाखापदव्यवहारानर्थक्यम् । किञ्च—

भवन्ति—आसुरायणा वातायनाः पतञ्जलयो वेदभृतः प्राचीनयोग्या जैमिनेयाश्चेति ।

तेषामध्ययनम्—चतुर्दशोत्तरशतमाग्नेयं, द्विपञ्चाशदधिकत्रिशतमैन्द्रं, शतमेकोनविंशतिकं च पावमानं, पञ्चपञ्चाशदारण्यकं, दश महानाम्न्यः, पञ्चविंशत्यधिकं द्वादशशतमुत्तरार्चिकमित्येषा छन्दोगानामार्चिकसंहिता ।

द्विसहस्रं द्वाविंशतिकं च चतुर्धा सामानि यानि गायन्ति सामगाः । तानि सबालखिल्यानि सारण्यकानि ससुपर्णप्रेङ्खानि ।

---

"तेष्वनध्यायेष्वधीयानाः शक्रेणाभिहताः शेषान् प्रवक्ष्यामि" इति प्रतिपदगुच्यमानैतिह्यविरोधापत्तिः ।

तेषु सहस्रसामशाखासु मध्ये यैरनध्यायेषु स्वाध्यायः कृतस्तद्दण्डार्थं ते शक्रेण विनाश प्रापिताः । ये चावशिष्टास्तान् प्रवक्ष्यामि । तत्रावशिष्टासु शाखासु राणायनीयानां राणायनीयशाट्यमुग्र्याद्याः सप्त, कौथुमानाञ्चासुरायणादिजैमिनीयान्ताः षट् शाखाः, सङ्कलनया च त्रयोदश ग्रन्थोक्ताः । अतएव सामतर्पणे—राणायन-शाटचमुग्र्च-व्यास-भागुरि-औलुण्डि-गौल्गुलविभानुमानौपमन्यव-काराटि-मशकगार्ग्य-वार्षगव्य- कुथुम-शालिहोत्र - जैमिन्याख्यास्त्रयोदश सामगाचार्याः स्मृताः ।

एतेषां त्रयोदशानामध्ययनसङ्ख्यां निर्दिशति—आग्नेये पर्वणि चतुर्दशोत्तरं शतं मन्त्राः । ऐन्द्रे पर्वणि द्विपञ्चाशदधिकं त्रिशत मन्त्राः । पावमाने पर्वणि एकोनविंशत्यधिकशत मन्त्राः । आरण्यके पञ्चपञ्चाशन्मन्त्राः । ततश्च महानाम्नीसंज्ञका मन्त्रा दश । इति पूर्वार्चिकम् । उत्तरार्चिके पञ्चविंशत्यधिकद्वादशशतं खण्डाः ।

ग्रामगेयारण्यगेयोहोह्येत्याख्यानि चतुर्द्धा चतुःप्रकारकाणि सामानि द्वाविंशत्यधिकद्विसहस्रसङ्ख्यानि, तानि च बालखिल्यारण्यकसुपर्णप्रेङ्खसहितानि सन्ति ।

पुनरष्टौ ब्राह्मणानि । तान्यधीत्य चण्डात् प्रचण्डतरो भवति ।

केचित् पुनर्ऋक्तन्त्रं सामतन्त्रं संज्ञाधातुलक्षणमिति विधीयन्ते । एतानि परिशिष्टान्यधीत्य शिष्टविशिष्टो भवति । इत्येतत् सामगानमध्ययनं स्मृतम् ।

इति कात्यायनीये चरणव्यूहपरिशिष्टे तृतीयः सामवेदखण्डः

## अथर्ववेदखण्डः

अथर्ववेदस्य नव भेदा भवन्ति—पिप्पलादाः शौनका मोदाः शौक्वायना जाजला ब्रह्मबलाः कुमुदादिनो वेदस्पर्शाश्चारणविद्याश्चेति । तेषामध्ययनम्—

---

पुनश्च ब्राह्मणान्यप्यष्टसङ्ख्यानि । तेषां नामानि चाह सायणार्यः—अष्टौ हि ब्राह्मणग्रन्थाः प्रौढब्राह्मणमादिमम् । षड्विंशाख्यं द्वितीयं स्यात्ततः सामविधिर्भवेत् । आर्षेयं देवताध्यायो भवेदुपनिषत्ततः । संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिताः ॥ इति । तानि सर्वाण्यापि आर्चिकमन्त्रसामगानब्राह्मणानि चाधीत्य चण्डात्प्रचण्डतर उत्कृष्टादुत्कृष्टतरो भवतीति भावः ।

अथ विशिष्टमध्ययनं विधीयते—केचन सविशेषं परिश्राम्यन्तः सामाधीयन्ते । तत्र ऋक्तन्त्रादिलक्षणान्तानि गोभिलगृह्य-छाटचायनश्रौत-पुष्पसूत्राद्युपग्रन्थानामुपलक्षणानि । ऋक्तन्त्रादीनि सामसम्बन्धिलक्षणनिरूपकाणि शास्त्राणि परिशिष्टानि चाधीत्य शिष्टेषु सामवित्सु विशिष्टो महामान्यः श्रेष्ठो भवति । इत्येवं प्रकारेणैतत्सामगानामध्ययनं स्मृतमृषिभिरिति ।

इति सामवेदखण्डविवृतिः ।

अथर्वाख्येनर्षिणा दृष्टस्य वेदस्य पिप्पलादाद्या नव शाखाः चारणविद्यान्ताः परिसङ्ख्याताः । तेषां, नवानामथर्वशाखानामध्ययनं द्विविधं ब्रह्मत्वरूपमभिचाररूपञ्च भवति, तच्च सरहस्यं सोपनिषत्कम् । अथर्ववेदस्य

द्वादशैव सहस्राणि मन्त्राणामाभिचारिकम् ।
ब्रह्मत्वं सरहस्यं स्यादथर्ववेदविस्तरम् ॥

तेषां पञ्च कल्पा भवन्ति–नक्षत्रकल्पः शान्तिकल्पो वितानकल्पः संहिताकल्प आङ्गिरसकल्पश्चेति । कल्पे कल्पे परिशिष्टानि भवन्ति ।

सर्वेषामेव वेदानामुपवेदा भवन्ति—ऋग्वेदस्यायुर्वेद उपवेदो, यजुर्वेदस्य धनुर्वेद उपवेदः, सामवेदस्य गान्धर्ववेद उपवेदोऽथर्ववेदस्य स्थापत्यवेद उपवेद, इत्याह भगवान् कात्यायनः ।

इति कात्यायनीये चरणव्यूहपरिशिष्टे चतुर्थोऽथर्ववेदखण्डः

---

द्विपञ्चाशदुपनिषदः सन्तीति श्रूयते । अथर्वाध्ययने च मन्त्रसङ्ख्या द्वादशसहस्रात्मिका । अत्र ब्रह्मत्वं शान्तिकपौष्टिककर्मणोरुपलक्षणम् ।

तेषामुभयविधकर्मणामुपबृंहणार्थं पञ्च कल्पा भवन्ति । ते च—नक्षत्रकल्पः, शान्तिकल्पः, वितानकल्पो वैतानश्रौतसूत्राख्यः, संहिताकल्पः संहिताविध्यपरपर्यायः कौशिकगृह्यसूत्राख्यः, आङ्गिरसकल्पोऽभिचारकल्पापरपर्यायः । प्रतिकल्पं सम्बद्धानि कोटिहोमाग्निहोत्रादीनि द्वासप्ततिसङ्ख्याकानि अथर्वपरिशिष्टानि भवन्तीति विद्वांस आमनन्ति ।

सर्वेषां चतुर्णामपि वेदानां प्रत्येकमेक उपवेदोऽस्ति । ते च यथाक्रमं निर्दिश्यन्ते—आयुर्वेद-धनुर्वेद-गान्धर्ववेद-स्थापत्यवेदाश्चत्वार उपवेदाः । अत्रायुर्वेदस्य ऋग्वेदोपवेदत्वेऽस्ति विप्रतिपत्तिस्तस्याथर्वविषयत्वात् । तदन्यत्र वक्ष्यामः । इत्येवं चतुर्वेदीयचरणानां व्यूहं विस्तारं भगवान् कात्यायनो महर्षिराहेति ।

इत्यथर्ववेदखण्डविवृतिः ।

# चतुर्वेद-फलश्रुतिखण्डः

य इमे चत्वारो वेदास्तेषामेकैकस्य कीदृक् रूपं वर्णः प्रमा विधेत्युच्यते—ऋग्वेदः पद्मपत्राक्षः प्रबलजठरः सुविभक्तग्रीवः कुञ्चितकेशश्मश्रुः श्लक्ष्णो गोक्षीरवर्णः श्वेतकीर्तिः, प्रमाणे वितस्तिपञ्चकः।

यजुर्वेदः पिङ्गाक्षः कृशमध्यः स्थूलगलकपोलस्ताम्रवर्णः कृष्णवर्णो वा, प्रादेशषट्कमात्रो दीर्घत्वेन। सामवेदो नित्यं स्रग्वी सुप्रीतः शुचिवासाः क्षमी दान्तो बृहच्छरीरः कातरनयनः काञ्चननयनो वा आदित्यवर्णो वर्णेन, षडरत्निमात्रः। अथर्ववेदस्तीक्ष्णतरः प्रचण्डः कामरूपी विशालाक्षो विश्वात्मा विश्वसृट् क्षुद्रकर्मा विश्वसाक्षी महाप्राज्ञो नीलोत्पलवर्णो वर्णेन, पञ्चारत्निमात्रः।

---

य इमे ऋग्वेदादयश्चत्वारो वेदा भेदादिवर्णनेनोक्तास्तेषां मध्ये एकैकस्य रूपमाकृतिः, शुक्लादिर्वर्णः, प्रमा परिमाणम्, इत्यादीनां विधा प्रकार उच्यते। वेदानां वाङ्मयस्वरूपोपदेशानन्तरं श्रद्धातिशयविषयत्वात्तेषामाधिदैविकं स्वरूपमप्युपदिश्यते। तत्र ऋग्वेदस्य कमलपर्णनयनादिरूपम्। अत्र नीलमेव कमलमभिप्रेतं तस्यैव नेत्रोपमानस्यौचित्यात्। श्लक्ष्णो मृदुशरीरः। द्वादशाङ्गुलात्मको वितस्तिस्तेन सार्द्धद्विहस्तपरिमित उपविश्य मन्तव्यः। यजुर्वेदः क्षीणकटिः। सोऽप्युपविशन् दशाङ्गुलात्मकप्रादेशपरिमाणेन सार्द्धद्विहस्तपरिमितः। सामवेदस्तु मालाधारी क्षमाशीलो जितेन्द्रियस्तरलनेत्रः। स तु सार्द्धद्वाविंशाङ्गुलात्मकारत्निप्रमाणेन तिष्ठन् पञ्चहस्तपञ्चदशाङ्गुलपरिमित उक्तः। अथर्ववेदोऽत्युग्रः क्रोधशीलः इच्छारूपधारी उपनिषदां बहुत्वाद्विश्वात्मा अभिचारप्रयोजनवन्मन्त्रबाहुल्यात् क्षुद्रकर्मा तिष्ठन् सार्धसप्ताङ्गुलोनपञ्चहस्तपरिमित इत्यर्थः।

ऋग्वेदस्यात्रेयगोत्रं सोमो दैवतं गायत्रीछन्दः। यजुर्वेदस्य काश्यपगोत्रमिन्द्रो दैवतं त्रिष्टुप्छन्दः। सामवेदस्य भारद्वाज-गोत्रं रुद्रो दैवतं जगतीछन्दः। अथर्ववेदस्य वैखानसगोत्रं ब्रह्म दैवतमनुष्टुप्छन्दः।

य इदं वेदानां नाम रूपं गोत्रं दैवतं छन्दः प्रमाणं वर्णं वर्णयति, सोऽविद्वान् विद्वान् भवति, जन्मजन्मनि वेदपारगो भवति, अव्रतो व्रती भवति, अब्रह्मचारी ब्रह्मचारी भवति, जातिस्मरो जायते।

य इदं चरणव्यूहं गुर्विणीं श्रावयेत् स्त्रियम्।
पुमांसं जनयेत् पुत्रमृषिभिर्वेदपारगम्॥
य इदं चरणव्यूहं श्राद्धकाले पठेद् द्विजः।
अक्षय्यं तद् भवेच्छ्राद्धं पितॄंश्चैवोपतिष्ठते॥
य इदं चरणव्यूहं पठेत् स पंक्तिपावनः।
तारयेदात्मनो वंश्यान् सप्त पूर्वांस्तथाऽपरान्॥
य इदं चरणव्यूहं पठेत् पर्वसु पर्वसु।
विधूतपाप्मा स स्वर्गो ब्रह्मभूयाय कल्पते॥

---

वेदचतुष्टयस्य गोत्रदैवतच्छन्दसां विधानं स्पष्टार्थमेव। अथ प्रसङ्गादन्यत्रोक्तानि वेदपत्नीनां नामानि निर्दिश्यन्ते—ईतिधृतिः शिवा श्यामा चतस्रो वेदपत्न्यः। ज्ञातव्या यज्ञकालेषु ईशानादिव्यवस्थिताः॥ इति।

अथ वेदसम्बन्धिनामरूपादिज्ञानफलश्रुतिः य इदमित्यादिना। अथ चरणव्यूहाध्ययनफलमुच्यते।

फलश्रुतिः स्पष्टार्था। गर्भिणी गुर्विणी। पुमांसं पुरुषलक्षणोपेतमृषिभिस्तुल्यं पुत्रं जनयति। श्राद्धं कृतं पितॄनुपतिष्ठते पितृतृप्तिकरं भवतीत्यर्थः। भोजनकाले पंक्तौ यः कोऽपि गूढपापकारी स्याच्चेत्तत्संसर्गजदोषान् प्रमाज्य पावयति स पंक्तिपावन उच्यते। स्वर्गं गत्वा पश्चाद् ब्रह्मभावाय समर्थो

इत्याह भगवान् कात्यायनो भगवान् कात्यायनः ।

इति कात्यायनीये चरणव्यूहपरिशिष्टे पञ्चमश्चतुर्वेद-फलश्रुतिखण्डः

इति कात्यायनीयं चरणव्यूहपरिशिष्टं समाप्तम् ।

---

योग्यश्च भवतीति चरमलक्ष्यप्राप्तिरुक्ता । इदमिति क्लीबोक्तिः परिशिष्ट-विशेष्यमभिप्रेत्य मन्तव्या ।

याज्ञवल्क्यसुतो विश्वामित्रगणान्तर्गतकतगणोद्भवः परिशिष्टश्रौत-गृह्यकल्पानां प्रणेता इदं चरणव्यूहपरिशिष्टमाहेति कर्तृनिर्देशः । आर्षग्रन्थे-ष्वपरोक्षवृत्त्या स्वनामोल्लेखपूर्वकं ग्रन्थकर्तृत्वव्यवहारो दृष्टचरो रूढश्च । कात्यायनपदाभ्यासोऽवसानद्योतनार्थं इति शम् ।

इति चतुर्वेदफलश्रुतिखण्डविवृतिः ।

विद्यावारिधि-श्रीकिशोरमिश्रकृतौ कातीयचरणव्यूहस्य

पीयूषकणिकाव्याख्या सम्पूर्णा ।



